# ṢUBHÂSHITA-RATNA-BHÂṆḌÂGÂRAM.

OR

## GEMS OF SANSKRIT POETRY.

BEING

**A Collection of Witty, Epigrammatic, Instructive and Descriptive Verses.**

SELECTED AND ARRANGED

BY


## KÂS'ÎNÂTHA PÂṆḌURANGA PARABA.


---

SECOND REVISED AND ENLARGED EDITION.

---

Why are not more gems from our great authors scattered over the country? Great books are not in every body's reach; and though it is better to know them thoroughly than to know them only here and there, yet it is a good work to give a little to those who have neither time nor means to get more—COLERIDGE.

---

I have gathered a posie of other men's flowers, and nothing but the thread that binds them is mine own—MONTAIGUE.

PRINTED AND PUBLISHED

BY

JÂVAJÎ DÂDÂJÎ,

AND

JANÂRDANA MAHÂDEVA GURJARA

AT

THE "NIRṆAYA-SÂGARA" PRESS.

BOMBAY.

1886.

[illegible] २½ *Rupees.*

अथ

# श्रीसुभाषितरत्नभाण्डागारम्

नाम

विविधकाव्यनाटकसुभाषितग्रन्थादिभ्यः

## परबोपाङ्कपाण्डुरङ्गात्मजकाशिनाथशर्मणा

समुद्धृतः

**सहृदयहृदयाह्लादकः**

सूक्तिसंग्रहः ।

---

द्वितीयं संस्करणम् ।

---

कथमिह मनुष्यजन्मा सप्रविशति सदसि विबुधगमितायाम् ।
येन न सुभाषितामृतमाह्लादि निपीतमातृप्तेः ॥ चाणक्यस्य ॥

---


ग्रन्थोऽयं

**मुम्बय्याम्**

शाके १८०८ वत्सरे

जावजी दादाजी । जनार्दन ... व गुर्जर ।

इत्येताभ्यां निर्णयसागरयन्त्रालये मुद्राक्षरैरङ्कयित्वा प्राकाश्यं नीतः ।

---

मूल्यं सार्धं रूप्यकत्रयम् ।

# विज्ञप्तिः ।

शास्त्राब्धिं सकलं विलोड्य नितरां ग्रन्थः कृतोऽयं मया
लोकानन्दकरः समस्तसुकलासंतानजैवातृकः ।
अस्यास्वाद्य सुभाषितामृतरसानानन्दपूर्णान्तरा
इत्थं संप्रति नाकवासनिरतान्देवान्हसन्तु ध्रुवम् ॥ शार्ङ्गधरस्य ॥

ते सज्जनाः सुकविशाखिकवित्वपुष्पाण्यादाय गुम्फितवतः सुगुणैर्ममैतत् ।
संधारयन्तु कुसुमोज्ज्वलहाररूपं कण्ठे सुभाषितमपास्तसमस्तदोषम् ॥ शार्ङ्गधरस्य ॥

---

दृष्टं किमपि लोकेऽस्मिन्न निर्दोषं न निर्गुणम् ।
आवृणुध्वमतो दोषान्विवृणुध्वं गुणान्बुधाः ॥ चण्डकौशिके ॥

# विषयानुक्रमः ।

## प्रकरणम् १—मङ्गलाचरणप्रकरणम् ।



## प्रकरणम् २—सामान्यप्रकरणम् ।

## प्रकरणम् ३—राजप्रकरणम् ।

# प्रकरणम् ४–चित्रप्रकरणम् ।

## प्रकरणम् ५—अन्योक्तिप्रकरणम् ।

## प्रकरणम् ६—नवरसप्रकरणम् ।

॥ श्रीः ॥

# सुभाषितरत्नभाण्डागारम् ।

## प्रकरणम् १ ।

## मङ्गलाचरणप्रकरणम् ।

### परब्रह्म ।

अथ स्वस्थाय देवाय नित्याय [1]हतपाप्मने । त्यक्त[2]क्रमविभागाय चैतन्यज्योतिषे नमः ॥१॥ दिक्काला[3]द्यनवच्छिन्नानन्तचिन्मात्र[4]मूर्तये । स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥ २ ॥ मध्याह्नार्क[5]मरीचिकास्विव पयःपूरो यदज्ञानतः खं वायुर्ज्वलनो जलं क्षितिरिति त्रैलोक्य[6]मुन्मीलति । यत्तत्त्वं विदुषां [7]निमीलति पुनः [8]स्रग्भोगिभोगोपमं [9]सान्द्रानन्दमुपास्महे तदमलं [10]स्वात्मावबोधं [11]महः ॥ ३ ॥ यस्माद्विश्वमुदेति यत्र रमते यस्मिन्पुनर्लीयते भासा यस्य जगद्विभाति सहजानन्दोज्ज्वलं यन्महः । शान्तं शाश्वत[12]मक्रियं यम[13]पुनर्भावाय भूतेश्वरं द्वैतध्वान्तमपास्य यान्ति कृतिनः प्रस्तौमि तं पूरुषम् ॥ ४ ॥ यः सृष्टिस्थितिसंहृतीर्वितनुते ब्रह्मादिमूर्तित्रिकैर्यस्याधीनतया स्थितानि सदसत्कर्माण्यपि प्राणिनाम् । नित्येच्छाकृतिबुद्धिमानथ परो जीवात्परात्मा स्वयं सोऽयं वो विदधातु पूर्णमचिराच्चेतोगतं यद्भवेत् ॥ ५ ॥ शक्यं यन्न विशेषतो निगदितुं प्रेम्णैव यच्चिन्तितं मृद्वङ्गीवदनेन्दुमण्डलमिव स्वान्ते विधत्ते [14]मुदम् । यन्मुग्धानयनान्तचेष्टितमिवा[15]ध्यक्षेऽपि नो लक्षितं तत्तेजो विनयाद[16]मन्दहृदयानन्दाय वन्दामहे ॥ ६ ॥ विश्वेशो वः स पायात्त्रि[17]गुणसचिवतां योऽवलम्ब्या[18]नुवारं [19]विश्वद्रीचीनसृष्टिस्थितिविलयमजः स्वेच्छया निर्मिमीते । यस्येय[20]त्तामतीत्य प्रभवति महिमा कोऽपि [21]लोकैर्व्यतीतस्त्यक्तो यश्चक्षुराद्यैरपि निपुणतमैर्वीक्षणादिक्रियासु ॥ ७ ॥

---

१ नाशितकिल्बिषाय. २ विधिः. ३ अविषयीकृता. ४ प्रमाणम्. ५ आकाशे दृश्यमानगलज्जलायमानरश्मिसमूहः. मृगतृष्णेति यावत्. ६ ब्रह्मभिन्नतया तत्त्वेन भ्रमविषयोभवति. ७ खवाय्वादिरूपतद्भिन्नत्वेन भ्रमाविषयीभवति. ८ भ्रमेण गृहीतो मालायां सर्पकाय इव. ९ निबिडानन्दस्वरूपम्. १० ब्रह्मात्मकज्ञानस्वरूपम्. ११ तेजः. १२ निश्चलम्. १३ पुनरुत्पत्त्यभावाय. १४ आनन्दम्. १५ समीपस्थेऽपि. १६ बहु. १७ सत्त्वरजस्तमःसहायताम्. १८ वारंवारम्. १९ चराचरनिष्ठम्. २० सीमाम्. २१ सकललोकातीतः.

## गणेशः ।

वन्दे वन्दारु[1]मन्दारमिन्दुभूषणनन्दनम् । अमन्दानन्दसंदोहबन्धुरं[2] सिन्धुराननम्[3] ॥ १ ॥ आलम्बे जगदालम्बे[4] हेरम्बचरणाम्बुजे । शुष्यन्ति यद्रजःस्पर्शात्सद्यः प्रत्यूहवार्धयः[5] ॥ २ ॥ गजाननाय महसे प्रत्यूहतिमिरच्छिदे । अपारकरुणापूरतरङ्गितदृशे नमः ॥ ३ ॥ नमस्तस्मै गणेशाय यत्कण्ठः पुष्करायते[6] । मदाभोगघन[7]ध्वानो नीलकण्ठस्य ताण्डवे ॥ ४ ॥ अगजा[8]ननपद्मार्कं गजाननमहर्निशम् । अनेकदं[9] तं भक्तानामेकदन्त[10]मुपास्महे ॥ ५ ॥ चलत्कर्णानिलोद्धूतसिन्दूरारुणिताम्बरः । जयत्यकाले विसृजन्संध्यामिव गजाननः ॥ ६ ॥ एकदन्तद्युतिसितः शंभोः सूनुः श्रियेऽस्तु वः । विद्याकन्द इवोद्भिन्ननवाङ्कुरमनोहरः ॥ ७ ॥ दुरितसमूहबलाहकपटलीसंहरणपवमानम् । शिवयोरङ्काभरणं वन्दे किंचिद्गजाननं तेजः ॥ ८ ॥ अविरलविगलन्मदजलकपोलपालीनिलीनमधुपकुलः । उद्भिन्ननवश्मश्रुश्रेणिरिव द्विपमुखो जयति ॥ ९ ॥ एकरद द्वैमातुर[11] निस्त्रिगुण चतुर्भुजापि पञ्चकर[12] । जय षण्मुखनुत सप्तच्छदगन्धिमदौ[13]ष्टतनुतनय ॥ १० ॥ मङ्गलकलशद्वयमयकुम्भमदम्भेन भजत गजवदनम् । यद्दानतोयतरलैस्तिलतुलनालम्बि रोलम्बैः[14] ॥ ११ ॥ शिवयोः सुधा[15]हरिद्रादीप्तिमतोः सारभृज्जगत्पित्रोः । त्रिभुवनविघ्नध्वंसी करिकलभः[16] कश्चिदरुणिमा जयति ॥१२॥ युगपत्स्वगण्डचुम्बनलोलौ[17] पितरौ निरीक्ष्य हेरम्बः । तन्मुखमेलनकुतुकी स्वाननमपनीय परिहसन्पायात् ॥ १३ ॥ हस्तपङ्कजनिविष्टमोदकव्याजसंचरदशेषपुमर्थम् । नौमि किंचिदवधूनितशुण्डादण्डकुण्डलितमण्डितगण्डम् ॥१४॥ अन्तराय[18]तिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् । तं नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः ॥ १५ ॥ अशेषविघ्नप्रतिषेधदक्षमन्त्राक्षतानामिव दिङ्मुखेषु । विक्षेपलीला करशीकराणां करोतु वः प्रीतिमिभाननस्य ॥१६॥ दन्ताग्रनिर्भिन्नहिमाचलोर्वीरन्ध्रोत्थिताहीन्द्रमणिप्रभौघे । नागाननस्तम्भ[19]धिया कपोलौ घर्षन्पितृभ्यां हसितः पुनातु ॥ १७ ॥ दन्ताञ्चलेन[20] धरणीतलमुन्नमय्य पातालकेलिषु धृतादिवराहलीलम् । उल्लाघ[21]नोत्फणफणाधरगीयमानक्रीडा[22]वदानमिभराजमुखं नमामः ॥ १८ ॥ आनन्दमात्रमकरन्दमनन्तगन्धं योगीन्द्रसुस्थिरमिलिन्दमपास्तबन्धम् । वेदान्तसूर्यकिरणैकविकासशीलं हेरम्बपादशरदम्बुजमानतोऽस्मि ॥ १९ ॥ गण्डस्थलीगलदमन्दमदप्रवाहमाद्यद्द्विरेफमधुरस्वरदत्तकर्णः । हर्षादिवालसनिमीलितनेत्रयुग्मो विघ्नच्छिदे भवतु भूतपतिर्गणेशः ॥ २० ॥ लक्ष्मीं तनोतु सुतरामितरानपेक्षमङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम् ।

---

१ भक्तजनकल्पवृक्षम्. २ सुन्दरम्. ३ गजाननम्. ४ जगदाधारभूते. ५ विघ्नसमुद्राः. ६ मृदङ्गवदाचरति. ७ निबिडध्वनिः. ८ पार्वती. ९ मोक्षाद्यनेकवस्तुदातारम्. १० गणेशम्. ११ पार्वतीगङ्गारूपमातृद्वयवत्त्वादित्यर्थः. १२ शुण्डामादाय पञ्चकरत्वमित्यर्थः. १३ महादेवः. १४ भ्रमरैः. १५ चूर्णम्. १६ हस्तितुल्यः. १७ लुब्धौ. १८ विघ्नः. १९ शुण्डा. २० दन्ताग्रेण. २१ हर्षित. २२ कृतक्रीडः.

हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नं[1] विघ्नाद्रिभेदशतधार[2]धुरंधरं नः ॥ २१ ॥ अविरलमदधाराधौतकुम्भः शरण्यः फणिवरवृतगात्रः सिद्धसाध्यादिवन्द्यः । त्रिभुवनजनविघ्नध्वान्तविध्वंसदक्षो वितरतु गजवक्त्रः संततं मङ्गलं वः ॥ २२ ॥ जेतुं यस्त्रिपुरं हरेण हरिणा व्याजाद्बलिं बध्नता स्रष्टुं वारिभवोद्भवेन भुवनं शेषेण धर्तुं धराम् । पार्वत्या महिषासुरप्रमथने सिद्धाधिपैः सिद्धये ध्यातः पञ्चशरेण विश्वजितये पायात्स नागाननः ॥ २३ ॥ विघ्नध्वान्तनिवारणैकतरणिर्विघ्नाटवीहव्यवाड्[3]विघ्नव्यालकुलाभिमानगरुडो विघ्नेभपञ्चाननः । विघ्नोत्तुङ्गगिरिप्रभेदनपविर्विघ्नाम्बुधौ वाडवो विघ्नाघौघघनप्रचण्डपवनो विघ्नेश्वरः पातु वः ॥ २४ ॥ वन्दे तं गणनाथमार्थमनघं दारिद्र्यदावानलं शुण्डादण्डविधूयमानसमलं संसारसिन्धोस्तरिम् । यं नत्वा सुरकोटयः प्रभुवरं सिद्धिं लभन्ते परां सिन्दूरारुणविग्रहं परिपतद्दानाम्बुधाराप्लुतम् ॥ २५ ॥ उच्चैर्ब्रह्माण्डपिण्डद्वितयसहचरं[4] कुम्भयुग्मं दधानः प्रेङ्खन्[5]नागा[6]रिपक्षप्रतिभट[7]विकटश्रोत्रतालाभिरामः । देवः शंभोरपत्यं भुजगपतितनुस्पर्धिवर्धिष्णुहस्तस्त्रैलोक्याश्चर्यमूर्तिः स जयति जगतामीश्वरः कुञ्जरास्यः ॥ २६ ॥ दोर्द्योतद्दन्तखण्डः सकलसुरगणाडम्बरेषु प्रचण्डः सिन्दूराकीर्णगण्डः प्रकटितविलसच्चारुचान्द्रीयखण्डः । गण्डस्थानन्तघण्डः स्मरहरतनयः कुण्डलीभूतशुण्डो विघ्नानां कालदण्डः स भवतु भवतां भूतये वक्रतुण्डः ॥ २७ ॥ विघ्नेशो वः स पायाद्विहृतिषु जलधीन्यः करा[10]ग्रेण पीत्वा तस्मिन्नुद्धृत्य विश्वं विसृजति सकलं दृश्यते व्योम्नि देवैः । क्वापीशः क्वापि विष्णुः क्वचन कमलभूः क्वाप्यनन्तः[11] क्व च श्रीः क्वाप्यौर्वः[12] क्वापि शैलाः क्वचन मणिगणाः क्वापि नक्रादिचक्रम् ॥२८॥ विघ्नेशः सर्वविघ्नान्परिहरतु स यत्कर्णतालादुदञ्चद्वायुव्याधूतगण्डस्थलयुगलगलद्भूरिसिन्दूरपूरैः । आरण्याद्वैतभावं गतवति जगति क्वापि नो भाति भानुर्नैवासौ शीतभानुः क्वचिदपि नितरां भासते वा कृशानुः ॥ २९ ॥ क्रोडं तातस्य गच्छन्विशदबिसधिया शावकं शीतभानोराकर्षन्भालवैश्वानरनिशितशिखारोचिषा तप्यमानः । गङ्गाम्भः पातुमिच्छुर्भुजगपतिफणाफूत्कृतैर्दूयमानो मात्रा संबोध्य नीतो दुरितमपनुयाद्बालवेशो गणेशः ॥ ३० ॥ उच्चैरुत्तालगण्डस्थलबहुलगलद्दानपानप्रमत्तस्फीत[13]ालि[14]व्रातगीतिश्रुतिविधृतिकलोन्मीलितार्धाक्षिपक्ष्मा । भक्तप्रत्यूहपृथ्वीरुह[15]निवहसमुन्मूलनोच्चैरुदञ्चच्छुण्डादण्डाग्र उग्राभ्भक इभवदनो वः स पायादपायात् ॥ ३१ ॥ कल्याणं वो विधत्तां करट[16]मदधुनी[17]लोलकल्लोलमालाखेलल्लोलम्बकोलाहलमुखरितदिक्चक्रवालान्तरालम् । प्रत्नं[18] वेतण्ड[19]रत्नं सततपरिचलत्कर्णतालप्ररोहद्वाताङ्कूराजिहीर्षोद्दर[20]विवृतफणाशृङ्ग[21]भूषाभुजंगम् ॥ ३२ ॥ यः सि-

---

१ अधीनम्. २ वज्रम्. ३ अग्निः. ४ तुल्यम्. ५ आधुन्वन्. ६ गरुडः. ७ प्रतिस्पर्धि. ८ शुण्डादण्डः. ९ भ्रमरः. १० शुण्डाग्रेण. ११ शेषः. १२ वाडवः. १३ बहु. १४ भ्रमरसमुदायः. १५ पर्वतः. १६ गण्डस्थलम्. १७ मदोदकसरित्. १८ पुरातनम्. १९ गजश्रेष्ठः. २० ईषत्. २१ अग्रभागः.

न्धौ फेनराशिर्भुवि कुमुदवनं व्योम्नि नक्षत्रलक्ष्मीरब्धौ मुक्तासमूहस्तरुषु सुमनसो मानसे हंससंघः । श्रीकण्ठे भूतिलेशः शिखरिषु मणयो दिक्षु नीहारपानः पाण्डुः शुण्डाग्रजन्मा जयति गणपतेः शीकराणां विलासः ॥ ३३ ॥ सानन्दं नन्दिहस्ताहतमु[2]रजरवाहूतकौमारब[3]र्हित्रा[4]सान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसं[5]कोचभाजि । गण्डोड्डीनालिमालामुखरितककुभस्ता[6]ण्डवे शूलपाणेर्वैनायक्यश्चिरं वो वदनवि[7]धुतयः पान्तु चीत्कारवत्यः ॥ ३४ ॥

## सरस्वती ।

धातुश्चतुर्मुखीकण्ठशृ[8]ङ्गाटकविहारिणीम् । नित्यं प्रगल्भवाचालामुपतिष्ठे सरस्वतीम् ॥ १ ॥ सूक्ष्माय शुचये तस्मै नमो वाक्तत्त्वतन्तवे । विचित्रो यस्य विन्यासो विदधाति जगत्पटम् ॥ २ ॥ तद्दिव्यमव्ययं धाम सारस्वतमुपास्महे । यत्प्रसादात्प्रलीयन्ते मोहान्धतमसश्छ[9]टाः ॥ ३ ॥ पातु वो निक[10]षग्रावा मतिहेम्नः सरस्वती । प्रा[11]ज्ञेतरपरिच्छेदं वचसैव करोति या ॥ ४ ॥ शारदा शारदाम्भोजवदना वदनाम्बुजे । [12]सर्वदा सर्वदास्माकं संनिधिं [13]संनिधिं क्रियात् ॥ ५ ॥ करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः । पश्यन्ति [14]सूक्ष्ममतयः सा जयति सरस्वती देवी ॥ ६ ॥ शरणं करवाणि शर्मदं ते चरणं वाणि चराचरोपजीव्यम् । करुणाम[15]सृणैः कटाक्षपातैः कुरु मामम्ब कृतार्थसार्थवाहम् ॥ ७ ॥ आशासु राशीभवदङ्गवल्लीभासैव दासीकृतदुग्धसिन्धुम् । मन्दस्मितैर्निन्दितशारदेन्दुं वन्देऽरविन्दासनसुन्दरि त्वाम् ॥ ८ ॥ वचांसि वाचस्पतिमत्सरेण साराणि लब्धुं ग्रहमण्डलीव । मुक्ताक्षसूत्रत्वमुपैति यस्याः सा सप्रसादास्तु सरस्वती वः ॥ ९ ॥ ज्योतिस्तमोहरमलोचनगोचरं तज्जिह्वादुरासदरसं मधुनः प्रवाहम् । दूरे त्वचः पुलकबन्धि परं प्रपद्ये सारस्वतं किमपि कामदुघं रहस्यम् ॥ १० ॥ तव करकमलस्थां [16]स्फाटिकीम[17]क्षमालां नखकिरणवि[18]भिन्नां दाडिमीबीजबुद्ध्या । [19]प्रतिकलमनुकर्षन्येन [20]कीरो निषिद्धः स भवतु मम [21]भूत्यै वाणि ते म[22]न्दहासः ॥ ११ ॥ [23]तमोगणविनाशिनी सकलकालमुद्द्योतिनी धरातलविहारिणी [24]जडसमाजविद्वेषिणी । [25]कलानिधिसहायिनी लसदलोलसौदामिनी मदन्तरवलम्बिनी भवतु कापि [26]कादम्बिनी ॥ १२ ॥ या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना । या ब्रह्माच्युतशंकरप्रभृतिभिर्देवैः सदा वन्दिता सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ १३ ॥

---

१ हिमम्. २ मृदङ्गः. ३ मयूरः. ४ भयात्. ५ फणा. ६ नृत्ये. ७ चालनम्. ८ चतुष्पथम्. ९ समूहः. १० स्वर्णादिपरीक्षणशिला. ११ अज्ञानम्. १२ सर्वदात्री. १३ उत्तमनिधिम्. १४ कुशाग्रबुद्धयः. १५ स्निग्धम्. १६ स्फटिकमयीम्. १७ जपमालाम्. १८ मिश्राम्. १९ प्रतिक्षणम्. २० शुकः. २१ समृद्ध्यै. २२ मन्दहास्यम्. २३ अज्ञानम्; (पक्षे) अन्धकारः. २४ मन्दबुद्धिः; (पक्षे डलयोः सावर्ण्यात्) जलम्. २५ विद्वज्जनः; (पक्षे) चन्द्रः. २६ सरस्वती; (पक्षे) मेघमाला.

# शिवः ।

नमस्तुङ्गशिरश्चन्द्रबिम्बचामरचारवे । त्रैलोक्यनगरारम्भमूलस्तम्भाय शंभवे ॥ १ ॥
वामाङ्गी[1]कृतवामाङ्गि कुण्डलीकृतकुण्डलि[2] । आविरस्तु पुरो वस्तु भूतिभूत्यम्बराम्बरम्[3] ॥ २ ॥
निरुपादान[4]संभार[5]मभित्तावेव तन्वते । जगच्चित्रं[6] नमस्तस्मै कला[7]श्लाघ्याय शूलिने ॥ ३ ॥
चन्द्राननार्धदेहाय चन्द्रांशुसितमूर्तये । चन्द्रार्कानलनेत्राय चन्द्रार्धशिरसे नमः ॥ ४ ॥
दिगम्बरनितम्बिन्याः किमम्बरविभूषणम् । इत्थं वरहरः पायात्परीरम्भहरः परौ ॥ ५ ॥
भुजङ्गकुण्डलीव्यक्तशशिशुभ्रांशुशीतगुः । जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः ॥ ६ ॥
पिनाकफणिबालेन्दुभस्ममन्दाकिनीयुता । पवर्गरचिता मूर्तिर[8]पवर्गप्रदायिनी ॥ ७ ॥ संसेवितभृगुतुङ्गं विद्योतितवेदवेदाङ्गम् । परिनर्तितभयरङ्गं मनसिजभङ्गं समाश्रये लिङ्गम् ॥ ८ ॥
स जयति हिमकरलेखा चकास्ति यस्योमयोत्सुकान्निहिता । नयनप्रदीपकज्जलजिघृक्षया रजतशुक्तिरिव ॥ ९ ॥ पाणिग्रहे[9] पुलकितं[10] वपुरैशं भूतिभूषितं[11] जयति । अङ्कुरित इव मनोभू[12]र्यस्मिन्भस्मावशेषोऽपि ॥१०॥ मा वम संवृणु विषमिदमिति सातङ्कं पितामहेनोक्तः । प्रातर्जयति सलज्जः कज्जलमलिनाधरः शंभुः ॥ ११ ॥ जयति प्रियापदान्ते गरलग्रैवेयक[13]: स्मरारातिः । विषमविशिखे[14] विशन्निव शरणं गलबद्धकरवालः ॥ १२ ॥ संध्यासलिलाञ्जलिमपि कङ्कणफणिपीयमानमविजानन् । गौरीमुखार्पितमना विजयाहासितः शिवो जयति ॥ १३ ॥ प्रणयकुपितप्रियापदलाक्षासंध्यानुबन्ध[15]मधुरेन्दुः । तद्वलयकनकनिकषग्रावग्रीवः शिवो जयति ॥ १४ ॥ अहिभूषणोऽप्यभयदः सुकलितहालाहलोऽपि यो नित्यः । दिग्वसनोऽप्यखिलेशः तं शशधरशेखरं वन्दे ॥ १५ ॥ जयति जटाकिञ्जल्कं[16] गङ्गामधु मुण्डवलयबीजमयम् । गलगरलपङ्कसंभवमम्भोरुहमाननं शंभोः ॥ १६ ॥ प्रतिबिम्बितगौरीमुखविलोकनोत्कम्पशिथिलकरगलितः । स्वेदभरपूर्यमाणः शंभोः सलिलाञ्जलिर्जयति ॥ १७ ॥ आदाय[17] चापमचलं[18] कृत्वाहीनं[19] गुणं विषमदृष्टिः[20] । यश्चित्रमच्युतशरो[21] लक्ष्य[22]मभाङ्क्षीत्[23]न्नमस्तस्मै ॥ १८ ॥ उपहरणं[24] विभवानां संहरणं सकलदुरितजालस्य । उद्धरणं संसाराच्चरणं वः श्रेयसेऽस्तु विश्वपतेः ॥ १९ ॥ भिक्षुकोऽपि सकलेप्सितदाता प्रेतभूमिनिलयोऽपि

---

१ स्त्री. २ सर्पः. ३ दिगम्बरम्. ४ उपकरणम्; (पक्षे) तूलिकादिकम्. ५ संपत्तिः; (पक्षे) समूहः. ६ नानाकारम्; (पक्षे) आलेख्यम्. ७ चन्द्रकला; (पक्षे) आलेख्यक्रियाकौशलम्. ८ मोक्षः. ९ परिणये. १० संजातपुलकम्. ११ भस्मना शोभितम्. १२ मदनः. १३ कण्ठभूषा. १४ मदने. १५ आरम्भः. १६ केसरः. १७ त्रिलोचनो हिमाचलं धनुः, वासुकिं ज्याम्. विष्णुं शरं च विधाय त्रिपुरासुरं जघानेति प्रकृतोऽर्थः. चलनशून्यं धनुः, अहीनो धनुर्दण्डादन्यूनो गुणः, विषमा लक्ष्यादन्यत्र निहिता दृष्टिः, न च्युतः शरो यस्य तथाविधः, तथापि लक्ष्यभङ्ग इति विरोधाभासः. १८ स्थिरम्; (पक्षे) पर्वतम्. १९ गुणरहितम्; (पक्षे) अहीनमिति पदच्छेदः. सर्पराजं गुणं कृत्वेत्यर्थः. २० असमदृक्; (पक्षे) त्रिलोचनत्वाद्विषमदृष्टिः. २१ न च्युतः शरो यस्य; (पक्षे) अच्युतो विष्णुः स एव शरो यस्य. २२ शरव्यम्. त्रिपुरमित्यर्थः. २३ बभञ्ज. २४ दातारम्.

पवित्रः । भूतमित्रमपि योऽभयसत्री तं विचित्रचरितं शिवमीडे॥२०॥पाणिग्रहे पर्वतराजपुत्र्याः पादाम्बुजं पाणिसरोरुहाभ्याम् । अश्मानमारोपयतः स्मरारेर्मन्दस्मितं मङ्गलमातनोतु ॥ २१ ॥ पार्श्वस्थपृथ्वीधरराजकन्याप्रकोपविस्फूर्जथुकातरस्य । नमोऽस्तु ते मातरिति प्रणामाः शिवस्य संध्याविषया जयन्ति ॥ २२ ॥ क तिष्ठतस्ते पितरौ ममेवेत्यपर्णयोक्ते परिहासपूर्वम् । क वा ममेव श्वशुरौ तवेति तामीरयत्सस्मितमीश्वरोऽव्यात् ॥ २३ ॥ वक्त्राणि पञ्च कुचयोः प्रतिबिम्बितानि दृष्ट्वा दशाननसमागमनभ्रमेण । भूयोऽपि शैलपरिवृत्तिभयेन गाढमालिङ्गितो गिरिजया गिरिशः पुनातु ॥ २४ ॥ पौलस्त्यपीनभुजसंपदुदस्यमानकैलाससंभ्रमविलोलदृशः प्रियायाः । श्रेयांसि वो दिशतु निह्नुतकोपचिह्नमालिङ्गनोत्पुलकमासितमिन्दुमौलेः ॥ २५ ॥ संध्यानतौ नरपुरंध्रितनोः सरोपमुत्सारिते गिरिजया निजपाणिपद्मे । उत्सर्पिकङ्कणफणीन्द्रफणार्पणेन पूर्णोऽञ्जलिर्जयति बालमृगाङ्कमौलेः ॥ २६ ॥ यस्याहुरागमविदः परिपूर्णशक्तेरंशे कियत्यपि निविष्टममुं प्रपञ्चम् । तस्मै तमालरुचिभासुरकन्धराय नारायणीसहचराय नमः शिवाय ॥ २७ ॥ कुसुमशरविलासे भङ्गुरस्याद्रिपुत्रीकरतलवलयस्य क्ष्मागतस्यार्धमेकम् । निजमिव शशिखण्डं याचमानस्य शंभोर्भवतु सह विवादः कान्तया कौतुकाय ॥ २८ ॥ कथयत कथमेपा मेनया विप्रदत्ता शिव शिव गिरिपुत्री वृद्धकापालिकाय । इति वदति पुरंध्रीमण्डले सिद्धिलेशव्ययकृतवरवेशः पातु वः श्रीमहेशः ॥ २९ ॥ रचयति सहसा यश्चित्रमेतत्प्रपञ्चं प्रशमयति च तद्वत्केनचित्कौतुकेन । अविदितमपरैस्तच्चण्डमुण्डादिनानादनुजदलनदक्षं शर्वसर्वस्वमव्यात् ॥ ३० ॥ अरुणनयनं सभ्रूभङ्गं दरस्फुरिताधरं सुतनु शशिनः क्लिष्टां कान्तिं करोतु तवाननम् । कृतमनुनयैः कोपोऽयं ते मनस्विनि वर्धतामिति गदितयाश्लिष्टो देव्या शिवाय शिवोऽस्तु वः ॥ ३१ ॥ प्रणयकुपितां दृष्ट्वा देवीं ससंभ्रमविस्मितस्त्रिभुवनगुरुर्भीत्या सद्यः प्रणामपरोऽभवत् । नमितशिरसो गङ्गालोके तया चरणाहतावबतु भवतस्त्र्यक्षस्यैतद्विलक्षमवस्थितम् ॥ ३२ ॥ कस्त्वं शूली[2] मृगय भिषजं[3] नीलकण्ठः[4] प्रियेऽहं केकामेकां[5] कुरु पशुपतिर्नैव दृश्ये विषाणे[6] । स्थाणुर्[7]मुग्धे न वदति तरुर्जीवितेशः शिवाया[8] गच्छाटव्यामिति हतवचाः पातु वश्चन्द्रचूडः ॥ ३३ ॥ वन्दे देवं जलधिशरधिं[9] देवतासार्वभौमं व्यासप्रष्ठा[10] भुवनविदिता यस्य वाहाधिवाहाः[11] । भूषापेटी[12] भुवनमधरं[13] पुष्करं[14] पुष्पवाटी[15] शाटीपालाः[16] शतमखमुखाश्[17]चन्दनद्रुर्[18]मनोभूः ॥ ३४ ॥ च्यु-

---

१ वज्रनिर्घोषः. २ त्रिशूली; (पक्षे) शूलरोगवान्. ३ वैद्यम्. ४ शिवः; (पक्षे) मयूरः. ५ मयूरवाणी. ६ शृङ्गे. ७ शिवः; (पक्षे) छिन्नवृक्षप्रकाण्डम्. ८ पार्वत्याः; (पक्षे) क्रोष्ट्र्याः. ९ त्रिपुरसंहारे शरीकृतस्य विष्णोर्विश्रान्तिस्थानत्वात्. १० व्यासप्रमुखाः. ११ वाहनानां वेदानामित्यर्थः. अधिवाहा वाहनाधिकृताः. १२ सर्पभूषणत्वादित्यर्थः. १३ पातालम्. १४ आकाशम्. १५ पुष्पस्थानीयचन्द्रोद्गमाधारत्वात्. १६ दिगम्बरत्वेन दिशामेव शाटीरूपत्वात्. १७ इन्द्रादयो दिक्पाला इत्यर्थः. १८ चन्दनस्थानीयभस्मसंबन्धित्वात्. मदनभस्मना शिवेनाङ्गानामनुलेपनस्य प्रसिद्धेः.

तामिन्दोर्लेखां रतिकलहभग्नं च वलयं द्वयं चैकीकृत्य प्रहसितमुखी शैलतनया । अवोचद्यं पश्येत्यवतु गिरिशः सा च गिरिजा स च क्रीडाचन्द्रो दशनकिरणैः पूरिततनुः॥३५॥ नमस्तुभ्यं देवासुरमुकुटमाणिक्यकिरणप्रणालीसंभेदस्नपितचरणाय स्मरजिते । महाकल्पस्वाहाकृतभुवनचक्रोऽपि नयने निरोद्धुं भूयस्तत्प्रसरमिव कामं हुतवते ॥ ३६ ॥ असोढा तत्कालोल्लसदसहभावस्य तपसः कथानां विश्रम्भेष्वपि च रसिकः शैलदुहितुः । प्रमोदं वो दिश्यात्कपटबटुवेशापनयने त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥ ३७ ॥ सहस्रास्यो नागः प्रभुरपि मतः पञ्चवदनः षडास्यो हन्तैकस्तनय इतरो वारणमुखः । सदा भैक्ष्यं शश्वत्प्रभवतु कथं वर्तनमिति श्वसन्त्यां पार्वत्यामथ जयति शंभुः स्मितमुखः ॥ ३८ ॥ मौनादस्तमितैव चाटुभणितिः स्वस्तैकहस्ताद्गतं दूरेऽप्यञ्जलिबन्धनं प्रणमनं स्तब्धार्धमूर्ध्नः कुतः । इत्थं संघटितैकविग्रहतया व्यग्रो गिरिग्रामणीर्जायां जातरुषं जयत्यनुनयन्देवस्त्रिलोकीगुरुः ॥३९॥ यस्मिन्बुद्बुदसंकरा इव बहु ब्रह्माण्डखण्डाः क्वचिद्भान्ति क्वापि च सीकरा इव विरिञ्चाद्याः स्फुरन्ति भ्रमात् । चिद्रूपा लहरीव विश्वजननी शक्तिः क्वचिद्द्योतते स्वानन्दामृतनिर्भरं शिवमहापाथोनिधिं तं नुमः ॥ ४० ॥ कल्पान्ते शमितत्रिविक्रममहाकङ्कालबद्धस्फुरच्छेषस्यूतनृसिंहपाणिनखरप्रोत्क्षिप्तकोलामिषः । विश्वैकार्णवताविशेषमुदितौ तौ मत्स्यकूर्मावुभौ कर्षन्धीवरतां गतः स तु सतां मोहे महाभैरवः ॥ ४१ ॥ भीतिर्नास्ति भुजंगपुंगवविषात्प्रीतिर्न चन्द्रामृतान्नाशौचं हि कपालदामलुलनाच्छौचं न गङ्गाजलात् । नोद्वेगश्चितिभस्मना न च सुखं गौरीस्तनालिङ्गनादात्मारामतया हिताहितसमः स्वस्थो हरः पातु वः ॥ ४२ ॥ वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः । अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥ ४३ ॥ आनन्दश्लथिताः समाधिषु मुखे गौर्या विलासोल्लसाः संभ्रान्ताः क्षणमुद्गताः क्षणमथ स्मेरा निजे वैकृते । क्रूराः कृष्टशरासने मनसिजे दग्धे घृणाकूणितास्तत्कान्तारुदितेऽश्रुपूरतरलाः शंभोर्दृशः पान्तु वः ॥ ४४ ॥ स्वर्भानुः सुरवर्त्मनानुसरति ग्रासाभिलाषादसाविन्दोरिन्दुमुखि ग्रसेत किमुत भ्रान्त्या भवत्या मुखम् । इत्थं नाथगिरा नभोर्पितदृशो वक्त्रे भवान्या भृशं मानिन्याः कृतचुम्बनस्त्रिनयनः स्तादिष्टसिद्ध्यै सताम् ॥ ४५ ॥ विष्णोश्चागमनं निशम्य सहसा कृत्वा फणीन्द्रं गुणं कौपीनं परिधाय चर्म करिणः शंभुः पुरो धावति । दृष्ट्वा विष्णुरथं सकम्पहृदयः सर्पोऽपतद्भूतले कृत्तिर्विस्खलिता ह्रियानतमुखो नग्नो हरः पातु वः ॥ ४६ ॥ भस्मान्धोरगफूत्कृतिस्फुटभवद्भालस्थवैश्वानरज्वालास्विन्नसुधांशुमण्डलगलत्पीयूषधारारसैः । संजीवद्गजचर्मगर्जितभयभ्रा-

१ ओघः. २ कलहः. ३ आकुलः. ४ वामनः. ५ अस्थिपञ्जरः. ६ वराहः. ७ द्यावापृथिव्यौ. ८ विकारे. ९ दयासंकुचिताः. १० राहुः. ११ सूत्रम्. १२ गरुडम्. १३ गजचर्म.

म्यद्भृषाकर्षणव्यासक्तः सहसाद्रिजोपहसितो नग्नो हरः पातु वः ॥ ४७ ॥ एकोऽन्ते द्विसमस्त्रिलोचन इति ख्यातश्चतुर्भिः स्तुतो वेदैः पञ्चमुखः षडाननपिता सप्तर्षिभिर्वन्दितः । अष्टाङ्गो नवतुल्य आमरगणे वासो दशाशा दधत्स्वश्चैकादश सोऽवतान्न विजितो यो द्वादशात्मांशुभिः ॥ ४८ ॥ लीलाद्यूतजितां कलाधरकलां मौलौ दृढं कीलितां स्वीकर्तुं गैयमुन्नमय्य भुजयोर्विश्लेषयन्त्यास्तदा । पार्वत्याः कुचकुम्भपार्श्वयुगले सप्रेमदत्तेक्षणः कालक्षेपणमिन्दुमोचनविधौ देवः स नो रक्षतु ॥ ४९ ॥ भूत्यालेपनभूषितः प्रविलसन्नेत्राग्निदीपाङ्कुरः कण्ठे पन्नगपुष्पदामसुभगो गङ्गाजलैः पूरितः । ईषत्ताम्रजटाग्रपल्लवयुतो न्यस्तो जगन्मण्डपे शंभुर्मङ्गलकुम्भतामुपगतो भूयात्सतां श्रेयसे ॥ ५० ॥ मल्लीमाल्यधिया सुधाकरकलां कण्ठश्रियं कज्जलभ्रान्त्या भालविलोचनानलशिखां सिन्दूरपूराशया । कैलासे प्रतिबिम्बितात्स्ववपुषो गृह्णन्हसन्त्या मुहुः पार्वत्या प्रतिकर्मकर्मणि चिरं मुग्धो हरः पातु वः ॥ ५१ ॥ दास्येऽहं परिरम्भणानि कितव द्यूते जितानि त्वया धैर्यं धेहि यतः कृतः शतमहोरात्राणि तत्रावधिः । इत्युक्तः शिवया निशादिवसकृज्ज्योतिर्मयाक्षिद्वयद्रागुन्मेषनिमेषकोटिघटनाव्यग्रो हरः पातु वः ॥ ५२ ॥ मौलौ किं नु महेश मानिनि जलं किं वक्त्रमम्भोरुहं किं नीलालकवेणिका मधुकरी किं भ्रूलता वीचिका । किं नेत्रे शफरौ किमु स्तनयुगं प्रेङ्खद्रथाङ्गद्वयं साशङ्कामिति वञ्चयन्गिरिसुतां गङ्गाधरः पातु वः ॥ ५३ ॥ देव्याः प्राक्परिरम्भणे किल करौ द्वौ द्वौ पुनस्तत्करौ रोद्धुं तन्मुखमुन्मुखं रचयितुं द्वौ चाधरास्वादने । द्वौ नेत्रान्तपलालकोपनयने मोक्तुं च नीवीं दृढां द्वावित्थं सफलीकृताखिलकरः पायात्स वः शंकरः ॥ ५४ ॥ न क्रोधः क्रियतां प्रिये स तु धवन्मौलिस्थगङ्गोदरे मुग्धे मानसपूजितं त्यज कृतं युष्मन्नियोगद्वयम् । वक्रे श्लेषममुं निराकुरु कदाश्लिष्टोऽसि वक्रो मया वामाङ्ग्येति हतोत्तरः स्मरहरः स्मेराननः पातु वः ॥ ५५ ॥ अङ्गं येन रथीकृतं नयनयोर्युग्मं रथाङ्गीकृतं पात्रं स्वं रथकर्मसारथिकृतं श्वासास्तुरंगीकृताः । कोदण्डीकृतमात्मवीर्यमचिरान्मौर्वीकृतं भूषणं वामाङ्गं विशिखीकृतं दिशतु नः क्षेमं स धन्वी पुमान् ॥ ५६ ॥ नृत्यारम्भरसत्रसद्गिरिसुतारिक्तार्धसंपूर्तये निर्व्यूढभ्रमिविभ्रमाय जगतामीशाय तुभ्यं नमः । यच्चूडाभुजगेश्वरप्रभृतिभिस्ताद्दग्भ्रमन्तीर्दिशः पश्यद्भिर्घनघूर्णमानवदनैः शान्तोऽपि न श्रद्दधे ॥ ५७ ॥ उद्दामभ्रमिवेगविस्तृतजटावल्लीप्रणालीपतत्स्वर्गङ्गाजलदण्डिकावलयितं निर्माय तत्पञ्जरम् । संभ्राम्यद्भुजदण्डपक्षपटलद्वन्द्वेन हंसायितस्त्रैलोक्यव्ययनाटिकानयनटः स्वामी जगत्त्रायताम् ॥ ५८ ॥ यन्नाट्यभ्रमिघूर्णमानवसुधाचक्राधिरूढे भृशं मेरौ पार्श्वनिवासिवासरनिशाचित्रे परिभ्राम्यति । तैजस्यस्तडितो भवन्तु शतशो दृष्टा हि तास्ताः कथं तौम-

---

१ नन्दिनम्. २ अक्षधूर्त. ३ चक्रवाकः. ४ आलिङ्गने. ५ सर्पः. ६ समाप्त. ७ भ्रमणम्. ८ जलस्य निर्गमनमार्गे मकरमुखादिरूपा. ९ माला. १० कर्बुरवर्णः. ११ रात्रिः.

स्योऽपि स वः पुनातु जगतामन्त्येष्टियज्वा विभुः ॥ ५९ ॥ तत्कालोरभटीविजृम्भणपरित्रासादिव भ्रश्यता वामार्धेन तदेकशेषकरणं बिभ्रद्वपुर्भैरवम् । तुल्यं चाब्धिभुजंगभूषणमसौ भोगीन्द्रकङ्कालकैर्बिभ्राणः परमेश्वरो विजयते कल्पान्तकर्मान्तिकः ॥ ६० ॥ चञ्चच्चन्द्रिकचन्द्रचारुकुसुमो माद्यज्जटापल्लवो दृप्य[1]द्दारुण[2]दन्दशूकमणिमांस्तत्पञ्चशाखालयः । स्थाणुर्मे फलदो भवत्वतितरां गौरीमुखेन्दुद्रवत्पीयूषद्रवदोहदादिव दधद्देवद्रुमत्वं सदा ॥ ६१ ॥ वक्त्राम्भोरुहि विस्मिताः स्तबकिता वक्षोरुहि स्फारिताः श्रोणीसीमनि गुम्फिताश्चरणयोरक्ष्णोः पुनर्विस्तृताः । पार्वत्याः प्रतिगात्रचित्रगतयस्तन्वन्तु भद्राणि वो विद्धस्यान्तिकपुष्पसायकशरैरीशस्य दृग्भङ्गयः ॥ ६२ ॥ शैलेन्द्र[3]प्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लसद्रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः । आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥ ६३ ॥ दिक्कालात्मसमैव [4]यस्य विभुता [5]यस्तत्र विद्योतते [6]यत्रा[7]मुष्य सुधीभवन्ति किरणा राशेः [8]स [9]यासामभूत् । [10]यस्ता[11]त्पि[12]त्तमुषः[13]मुयोऽस्यै[14] हविषे [15]यस्त[16]स्य जीवातवे वोढा [17]यद्गुणमेष[18] मन्मथरिपोस्ताः पान्तु नो मूर्तयः ॥६४॥ जीर्णेऽप्युत्कटकालकूटगरले प्लुष्टे तथा मन्मथे नीते भासुरभालनेत्रतनुतां कल्पान्तदावानले । यः शक्त्या समलंकृतोऽपि शशिनं शैलात्मजां स्वर्धुनीं धत्ते कौतुकराजनीतिनिपुणः पायात्स वः शंकरः ॥ ६५ ॥ किं गोत्रं किमु जीवनं किमु धनं का जन्मभूः किं वयः किं चारित्र्यममुष्य के सहचराः के वंशजाः प्राक्तनाः । का माता जनकः शिवस्य क इति [19]प्रह्वेण पृथ्वीभृता पृष्टाः सस्मितनम्रमूकवदनाः सप्तर्षयः पान्तु वः ॥ ६६ ॥ तादृक्सप्तसमुद्रमुद्रितमहीभूभृद्भिरभ्रंकषैः स्रोतोभिः परिवारिता दिशि दिशि द्वीपैः समन्तादियम् । यस्य स्फारफणावलीमणिचये मज्जत्कलङ्काकृतिः शेषः सोऽप्यगमद्यदङ्गदपदं तस्मै नमः शंभवे ॥ ६७ ॥ तारानायकशेखराय जगदाधाराय धाराधरच्छायाधारककन्धराय गिरिजासङ्गैकभृङ्गारिणे । नद्या शेखरिणे दृशा तिलकिने नारायणेनास्त्रिणे नागैः कङ्कणिने नगेन गृहिणे नाथाय नित्यं नतिः ॥ ६८ ॥ केयूरीकृतकङ्कणीकृतजटाजूटावतंसीकृतज्यावल्लीकृतकुण्डलीकृतकटीसूत्राकृताहीश्वरः । पायाद्वस्तिलकीकृतप्रियतमादर्शीकृताक्षीकृतद्यूतारम्यपणीकृतेन्दुशकलः कात्यायनीकामुकः ॥ ६९ ॥ कान्तां कामपि कामयत्यनुदिनं ध्यानापदेशादयं येनामुं मुनयोऽप्यनादिनिधनं ध्यायन्ति धौतस्पृहाः । इत्यङ्कात्स्वकरे हृते गिरिजया पादे च पद्मासनाद्विश्वं पातु पुरंभ्रिनद्धवपुषः शंभोः समाधिव्ययः ॥ ७० ॥ स्नातः स्वर्गतरङ्गिणीजलभरैर्नेत्रोत्पलेनाञ्चितः पार्वत्याः सितभूतिचन्दनचयैरालिप्तगात्रोज्ज्वलः । देवश्चन्द्रकलासितभ्रुतिलको गौरीविवाहोत्सवारम्भे शैलकृतार्हणास्त्रिजगतामर्चो हरः

---

१ नाट्यभेदः. २ सर्पः. ३ संप्रदानम्. ४ आकाशस्य. ५ सूर्यः. ६ चन्द्रे. ७ सूर्यस्य. ८ चन्द्रः. ९ अपाम्. १० अग्निः. ११ अपाम्. १२ शुचिहृदकम्. १३ यजमानः. १४ अग्नेः. १५ वायुः. १६ यजमानस्य. १७ पृथिव्याः. १८ वायुः. १९ नम्रेण.

पातु वः ॥ ७१ ॥ उज्झित्वा दिशमम्बरं वरतरं वासो वसानश्चिरं हित्वा वासरसं पुनः पितृवने कैलासहर्म्याश्रयः। त्यक्त्वा भस्म कृताङ्गरागनिचयः श्रीखण्डसारद्रवैर्देवः पातु हिमाद्रिजापरिणयं कृत्वा गृहस्थः शिवः ॥ ७२ ॥ क्रीडन्मन्दरकन्दरोदरवलन्मन्दारवृन्दावने क्रोधान्धान्धकटातयाशु हरणे जृम्भत्रिशूलोद्गमः। त्रैलोक्याखिलसंकटोत्कटभयोद्रेकान्धकारांशुमान्पायाद्वस्त्रिपुरप्रमाथनपटुर्देवो हि पञ्चाननः ॥ ७३ ॥ गर्जद्भीमभुजंगभीषणफणाफूत्कारभीतिप्रदः क्रीडत्प्रेतपिशाचराक्षसगणः प्रत्यक्षतः प्रान्ततः। भालस्थः प्रलयानलोद्भटशिखः संक्रान्तसर्वास्पदः शार्दूलाजिनभृद्भयानकभयो भूयाद्भवो भूतये ॥ ७४ ॥ गौरीचुम्बनचञ्चलं चलचलद्घण्टप्रभामण्डलं व्यावल्गत्फणिकुण्डलं रतिरसप्रस्विन्नगण्डस्थलम्। प्रौढप्रेमपरंपरापरिचयप्रोत्फुल्लनेत्राञ्चलं शंभोरस्तु विभूतये हि भवतामुन्मत्तगङ्गाशिरः ॥ ७५ ॥ पाणौ कङ्कणमुत्फणं फणिपतिर्नेत्रं लसत्पावकं कण्ठः कुण्ठितकालकूटविषमो वस्त्रं गजेन्द्राजिनम्। गौरीलोचनलोभनाय सुभगो वेशो वरस्यास्ति मे गण्डोल्लासविभावितः पशुपतेर्हासोद्गमः पातु वः ॥ ७६ ॥ आखुर्वाञ्छति भस्मसूत्रहरणं व्यालस्तथा मूषकं व्यालं बर्हिरयं गजारि वृषभं गङ्गा तथा चन्द्रकम्। इत्थं दुःखमहर्निशं शृणु विभो सोढव्यमेतत्कथं शंभोर्विष्णुविवेकचारुरचया त्वां पातु इत्थं वचः ॥ ७७ ॥ [1]दिव्यं वारि कथं यतः सुरधुनी मौलौ कथं पावको दिव्यं तद्धि विलोचनं कथमहिर्दिव्यं च चाङ्गे तव। तस्माद्द्यूतविधौ त्वयाद्य मुषितो हारः परित्यज्यतामित्थं शैलभुवा विहस्य लपितः शंभुः शिवायास्तु वः ॥ ७८ ॥ तातं तत्ताततातं कथय हरकुलेऽलंकृते संप्रदाने तच्छ्रुत्वा चन्द्रमौलिर्नतवदनकजो जातलज्जो बभूव। ब्रह्मावादीत्तदानीं शृणुत हरकुलं वेदकण्ठोग्रकण्ठौ श्रीकण्ठान्नीलकण्ठः प्रहसितवदनः पातु वश्चन्द्रचूडः ॥ ७९ ॥ या सृष्टिः स्रष्टुराद्या [2]वहति विधिहुतं [3]या हविर्या[4] च होत्री ये[5] द्वे कालं विधत्तः श्रुतिविषयगुणा [6]या स्थिता व्याप्य विश्वम्। [7]यामाहुः सर्वबीजप्रकृतिरिति [8]यया प्राणिनः प्राणवन्तः प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ ८० ॥ एकैश्वर्यस्थितोऽपि प्रणतबहुफलो यः स्वयं कृत्तिवासाः कान्तासंमिश्रदेहोऽप्यविषयमनसां यः पुरस्ताद्यतीनाम्। अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः सन्मार्गालोकनाय व्यपनयतु स नस्तामसीं वृत्तिमीशः ॥ ८१ ॥ कैलासाद्रा[9]वुदस्ते परिचलति गणेषूल्लसत्कौतुकेषु क्रोडं[10] मातुः कुमारे विशति विषमुचि[11] प्रेक्षमाणे सरोषम्। पादावष्टम्भसीदद्वपुषि दशमुखे याति पातालमूलं क्रुद्धोऽप्याश्लिष्टमूर्तिर्भय[12]घनमुमया पातु हृष्टः शिवो नः ॥ ८२ ॥ क्रोधेद्धैर्दृष्टिपातैस्त्रिभिरुपशमिता वह्नयोऽमी [13]त्रयोऽपि त्रासार्ता ऋत्विजोऽधश्चपलगणहृतोष्णीषपट्टाः पतन्ति। दक्षः

१ शपथविशेषः. २ उदकरूपा. ३ अग्निरूपा. ४ यजमानरूपा. ५ सूर्यचन्द्ररूपे. ६ आकाशरूपा. ७ पृथ्वीरूपा. ८ वायुरूपा. ९ ऊर्ध्वास्ताचले. १० भुजान्तरे. ११ सर्पे. १२ भयागारम्. १३ दक्षिणगार्हपत्याहवनीयाख्याः.

स्तौत्यस्य पत्नी विलपति कृपणं विद्रुतं चापि देवैः शंसन्नित्यात्तहासो मखमथनविधौ पातु देव्यै शिवो वः ॥ ८३ ॥ आसीने पूष्णि तूर्णीं व्यसनिनि शशिनि व्योम्नि कृष्णे सतृष्णे दैत्येन्द्रे जातनिद्रे द्रवति मघवति क्लान्तकान्तौ कृतान्ते । अब्रह्मण्यं ब्रुवाणे कमलपुटकुटीश्रोत्रिये शान्त्युपाये पायाद्वः कालकूटं झटिति कवलयँल्लीलया नीलकण्ठः ॥ ८४ ॥ केयं मूर्ध्न्यन्धकारे तिमिरमिह कुतः सुभ्रु कान्तेन्दुयुक्ते कान्ताप्यत्रास्ति काचिन्ननु भवतु मया पृष्टमेतावदेव । नाहं द्वन्द्वं करोमीत्यपनय शिरसस्तूर्णमेनामिदानीमित्थं प्रोक्तो भवान्या प्रतिवचनजितः पातु वश्चन्द्रचूडः ॥ ८५ ॥ धन्या केयं स्थिता ते शिरसि शशिकला किं नु नामैतदस्या नामैवास्यास्तदेतत्परिचितमपि ते विस्मृतं कस्य हेतोः । नारीं पृच्छामि नेन्दुं कथयतु विजया न प्रमाणं यदीन्दुर्देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः ॥ ८६ ॥ हर्षादम्भोजजन्मप्रभृतिदिविषदां संसदि प्रीतिमत्या श्वश्र्वा मौलौ पुरारेर्दुहितृपरिणये साक्षतं चुम्ब्यमाने । तद्वक्त्रं मौलिवक्त्रे मिलितमिति भृशं वीक्ष्य चन्द्रः सहासो दृष्ट्वा तद्वृत्तमाशु स्मितसुभगमुखः पातु वः पञ्चवक्त्रः ॥ ८७ ॥ कल्पान्तक्रूरकेलिः क्रतुकदनकरः कुन्दकर्पूरकान्तिः क्रीडन्कैलासकूटे कलितकुमुदिनीकामुकः कान्तकायः । कङ्कालक्रीडनोत्कः कलितकलकलः कालकालीकलत्रः कालिन्दीकालकण्ठः कलयतु कुशलं कोऽपि कापालिको नः ॥ ८८ ॥ दृष्टः सप्रेम देव्या किमिदमिति भयात्संभ्रमाच्चासुरीभिः शान्तान्तस्तत्त्वसारैः सकरुणमृषिभिर्विष्णुना सस्मितेन । आदायास्त्रं सगर्वैरुपशमितवधूसंभ्रमैर्दैत्यवीरैः सानन्दं देवताभिर्मयपुरदहने धूर्जटिः पातु युष्मान् ॥ ८९ ॥ क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण । आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥ ९० ॥ कल्याणं वः क्रियासुर्मिलदटनियुगस्थास्नुगीर्वाणभोगिस्त्रैणव्यत्यस्तकल्पद्रुमनवसुमनोनागहारावलीनि । नालीकाश्लिष्टलक्ष्मीकरचलनलिनोद्धीतमाध्वीकधारातिम्यत्फालेक्षणानि त्रिपुरहरधनुर्ज्यालताकर्षणानि ॥ ९१ ॥ कल्पान्ते क्रोधनस्य त्रिपुरविजयिनः क्रीडया संचरिष्णोः कृत्वापि प्राणिजातैर्निजमुखकुहरातिथ्यमप्राप्ततृप्तेः । दिग्भित्तीः प्रेक्ष्य शून्याः प्रलयजलनिधिं प्रेक्ष्य चात्मीयमूर्तिग्रासव्यासक्तमोघश्रमजनितरुषः पान्तु वो गर्जितानि ॥ ९२ ॥ पर्यङ्कग्रन्थिबन्धद्विगुणितभुजगाश्लेषसंवीतजानोरन्तःप्राणावरोधव्युपरतसकलज्ञानरुद्धेन्द्रियस्य । आत्मन्यात्मानमेव व्यपगतकरणं पश्यतस्तत्त्वदृष्ट्या शंभोर्वः पातु शून्येक्षणघटितलयब्रह्मलग्नः समाधिः ॥ ९३ ॥ वृत्ता-

१ दीनस्वरेण. २ सूर्ये. ३ ब्रह्मणे. ४ अन्धकरिपो; (पक्षे) तमसि. ५ ब्रह्मा. ६ धनुष्कोटिः. ७ स्थिरतरम्. ८ विष्णुरूपः शरः. ९ पुष्परसः. १० वन्ह्यात्मकं तृतीयलोचनम्. ११ योगशास्त्रप्रसिद्धासनविशेषः. १२ संधिः. १३ आवृत. १४ निवृत्त. १५ चक्षुरादीन्येकादशेन्द्रियाणि बुद्धिरहंकारश्चेति त्रयोदशविधम्. १६ प्रपञ्चाभावः. १७ चित्तैकामता.

भिख्यां तृतीयां श्रितविविधगणां छन्दसां वर्णनीयां यातां सर्वादिमत्त्वं सुरगणकलितां भासमत्त्वं दधानाम् । युक्तं स्थानं नयन्तीं लघुमपि सकलं बिभ्रतीं मालयायान्वन्दे वार्धिभवर्णां धृतमुनियतिकां स्रग्धरां शंभुमूर्तिम् ॥ ९४ ॥ देहार्धानद्धकान्ताकचकुसुमचयो भालनेत्रानलार्चिः पीनोष्मामौलिखेलन्मुखरसुरनदीनीररम्यो जगन्ति । स्फीतोत्तंसेन्दुकान्तिर्द्विरदढतिदृढाच्छादनव्यक्तशीतः शंभुभूषास्थिकुन्दप्रकरपरिवृतः पातु सर्वर्तुमूर्तिः ॥ ९५ ॥ हेयोपादेयशून्यं मुनिगणमनसामद्वयानन्दहेतुः सेतुः संसारवारांनिधिसुखतरणे श्रीमहेशानसंज्ञम् । प्रालेयं ज्योतिरन्तः परिणतितिमिरव्यूहविच्छेददक्षं किंचिद्वाचामधीशं स्फुरतु मम हृदि त्र्यक्षरं विश्वसाक्षि ॥ ९६ ॥ शुद्धान्ते सीधुपानोन्मदमदनमदोन्मादमत्तालिकालीतालीसंताड्यमानोद्भटमुरजरवाडम्बरोल्लासिताङ्गः । नृत्यन्मग्नो विलज्जश्चलविकटतटैः स्रस्तयैर्लोचनार्धैर्दृष्टः स्त्रीभिः सहासं प्रहसनमुदितः पातु वो वामदेवः ॥ ९७ ॥ बिभ्रत्पाथःकपर्दे सुरनगरनरीमिन्दुलेखां ललाटे नेत्रान्तः कालवह्निं गरलमपि गले व्याघ्रचर्माङ्गभागे । पञ्चास्यो वै त्रिनेत्रो वृषभगतिरतिर्वामभागार्धवामः संदिश्यात्संपदं वः सह सकलगुणैरद्भुताकार ईशः ॥९८॥ **जटाजूटः** ॥ स धूर्जटिजटाजूटो जायतां विजयाय वः । यस्यैकपलितभ्रान्तिं करोत्यद्यापि जाह्नवी ॥ ९९ ॥ चूडापीडकपालसंकुलगलन्मन्दाकिनीवारयो विद्युत्प्रायललाटलोचनपुटज्योतिर्विमिश्रत्विषः । पान्तु त्वामकठोरकेतकशिखासंदिग्धमुग्धेन्दवो भूतेशस्य भुजंगवल्लिवलयस्रङ्नद्धजूटा जटाः ॥ १०० ॥ गङ्गावारिभिरुक्षिताः फणिफणैरुत्पल्लवास्तच्छिखारत्नैः कोरकिताः सितांशुकलया स्मेरैकपुष्पश्रियः । आनन्दाश्रुपरिप्लुताक्षिहुतभुग्धूमैर्मिलद्दोहला नाल्पं कल्पलताः फलं ददतु वोऽभीष्टं जटा धूर्जटेः ॥ १०१ ॥ **गङ्गा** ॥ पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतङ्गहनम् । हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत ॥ १०२ ॥ इयं चिद्रूपापि प्रकटजडरूपा भगवती यदीयाम्भोबिन्दुर्वितरति च शंभोरपि परम् । पुनाना धुन्वाना निखिलमपि नानाविधमघं जगत्कृत्स्नं पायादनुदिनमपायात्सुरधुनी ॥ १०३ ॥ चूडाशीतकरस्तनंधयसुधानीरन्ध्रगन्धस्पृशः क्रीडाकङ्कणपन्नगेश्वरफणापीतावशिष्टा मुहुः । अङ्कासीनगिरीन्द्रजास्तनतटीहारावलीलोलनाः संतापं शमयन्तु वो हरजटागङ्गातरंगानिलाः ॥ १०४ ॥ वायुर्वाति यदङ्गसंगमवशाच्छ्रीशंभुरूपप्रदे गौरी रुष्यति तुष्यति त्वहिपतिर्विन्ध्याटवी शोचते । चन्द्रस्त्रस्यति कुप्यते हरिरपि ब्रह्मा परं शङ्कते सा गङ्गा निखिलं कलङ्कनिचयं भङ्गं तरंगैर्नयेत् ॥ १०५ ॥ शार्ङ्गी ब्रह्मकमण्डलोरधिगतैर्यैः प्रापि तीर्थाङ्कितां यैर्मृत्युंजयतामनायि गरलग्रस्तो जटाजूटगैः । येभ्योऽशिक्षत माधुरीं मृदुजटाजूटे मठे चन्द्रमास्तानीमानि पयांसि गौतमि तव श्रेयांसि यच्छन्तु नः ॥१०६॥ यन्नाम्नः प्रथमाक्षरं विजयते भानौ द्वितीयाक्षरं नित्यं नृत्यति सत्कवीन्द्रवदने

---

१ केशादौ जरसा यच्छौक्ल्यं तत्. २ तिर्यङ्नद्धमाला. ३ निबिड.

भूत्वान्तवर्णद्वयम् । रामो रावणमाजघान समरे शंभोः शिरःशालिनी सा सर्वाक्षरमालिनी भवतु मे भाग्याय भागीरथी ॥ १०७ ॥ मुक्ताभा नृकपालशुक्तिषु जटावल्लीषु मल्लीनिभा वह्नौ लाजनिभा दृशोर्मणिनिभा भोगोत्करे भोगिनाम् । नृत्यावर्तविवर्तनेरितपयःसंमूर्च्छितोच्छालिताः खेलन्तो हरमूर्ध्नि पान्तु भवतो गङ्गापयोबिन्दवः ॥ १०८ ॥ एषा धर्मपताकिनी तटतरुच्छायावसन्नाकिनी शुष्यत्पातकिनी भगीरथतपःसाफल्यसंदायिनी । प्रेमारूढपिनाकिनी गिरिसुतासांकेकरालोकिनी पापाडम्बरडाकिनी त्रिभुवनानन्दाय मन्दाकिनी ॥ १०९ ॥ स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटामूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः । भिन्द्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुमद्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥ ११० ॥ शैवालश्रेणिशोभां दधति हरजटावल्लयो हन्त यस्यास्तद्वासोल्लासवेलाद्वरशफरतुलां यत्र धत्ते कलावान् । उन्मीलद्रोगिभोगावलिसुभगसिताम्भोजसंभाविताम्भा गङ्गानङ्गारिसङ्गा महति तव विधौ मङ्गलान्यातनोतु ॥ १११ ॥ दृष्टाः संकष्टदाहाः श्रवणपथगताः पुण्यपुञ्जावगाहाः स्पृष्टाः संसारपाथोनिधिपतितधरोद्धारधुर्या वराहाः । पीतास्तापोपशान्तिप्रजननपटवस्ते सुधावारिवाहाः कल्याणं कल्पयन्तां कलिकलुषहरा विष्णुपद्याः प्रवाहाः ॥ ११२ ॥ तावत्कर्णाध्वयाता जनघनकलुषा धूनने गन्धवाहा दृष्टाः किं हव्यवाहाः सकृदहदहने स्वर्गतो पुण्यवाहाः । स्पष्टाः संसारहाहारवकटुकमहाम्भोधिमग्ने वराहाः पीताः पीयूषधाराधिकतरमधुराः पान्तु गोदोदवाहाः ॥ ११३ ॥ **शशिलेखा** ॥ पूर्णनखेन्दुद्विगुणितमञ्जीरा प्रेमशृङ्खला जयति । हरशशिलेखा गौरीचरणाङ्गुलिमध्यगुल्फेषु ॥ ११४ ॥ जयति परिमुषितलक्ष्मा भयादनुपसर्पतेव हरिणेन । इह केसरिकरजाङ्कुरकुटिला हरमौलिविधुलेखा ॥ ११५ ॥ श्रीकण्ठस्य कपर्दबन्धनपरिश्रान्तोरगग्रामणीसंदष्टां मुकुटावतंसकलिकां वन्दे कलामैन्दवीम् । या बिम्बप्रतिपूरणाय परितो निष्पीड्य संदंशिकायन्त्रेणेव ललाटलोचनशिखिज्वालाभिरावर्त्यते ॥ ११६ ॥ **लोचनम्** ॥ जयति ललाटकटाक्षः शशिमौलेः पक्ष्मलः प्रियाप्रणतौ । धनुषि स्मरेण निहितः सकण्टकः केतकेषुरिव ॥ ११७ ॥ अन्तर्नाडीनियमितमरुल्लङ्घितब्रह्मरन्ध्रं स्वान्ते शान्तिप्रणयिनि समुन्मीलदानन्दसान्द्रम् । प्रत्यग्ज्योतिर्जयति यमिनः स्पष्टलालाटनेत्रव्याजव्यक्तीकृतमिव जगद्व्यापि चन्द्रार्धमौलेः ॥ ११८ ॥ सानन्दा गणनायके सपुलका गौरीमुखाम्भोरुहे सक्रोधा कुसुमायुधे सकरुणा पादानते वज्रिणि । सस्मेरा गिरिजासखीषु सनया शैलाधिनाथे वहन्भूमीन्द्र प्रदिशन्तु शर्म विपुलं शंभोः कटाक्षच्छटाः ॥ ११९ ॥ एकं ध्याननिमी-

१ साकूतम्. २ अनूपसदृशः कश्चिन्नद्यादेरुपान्तदेशः. ३ बलवान्. ४ कान्तिम्. ५ नश्यत्. ६ झटिति. ७ व्यक्तीभवत्. ८ अक्षीणानाम्. महतामित्यर्थः. ९ सान्द्रस्निग्धः. १० मान्द्यम्. ११ जटाजूटः. १२ कर्तरिका. १३ शान्तिमति. १४ व्याप्तम्. १५ अधोगामि.

लनान्मुकुलितं चक्षुर्द्वितीयं पुनः पार्वत्या वदनाम्बुजस्तनतटे शृङ्गारभारालसम् । अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं शंभोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥ १२० ॥ पक्ष्मालीपिङ्गलिम्नः कण इव तडितां यस्य कृत्स्नः समूहो यस्मिन्ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहाव । अर्चिर्निःशेषचूडाशशिगलितसुधाघोरहंकारि कोणं तार्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः ॥ १२१ ॥ **कण्ठः** ॥ पातु वो नीलकण्ठस्य कण्ठः श्यामाम्बुदोपमः । गौरीभुजलता यत्र विद्युल्लेखेव राजते ॥ १२२ ॥ पातु वः शितिकण्ठस्य तमालश्यामलो गलः । संसक्तपार्वतीबाहुसुवर्णनिकषोपलः ॥ १२३ ॥ कस्तूरीतिलकन्ति भालफलके देव्या मुखाम्भोरुहे रोलम्बन्ति तमालबालमुकुलोत्तंसन्ति मौलिं प्रति । याः कर्णे विकचोत्पलन्ति कुचयोरंसे च कालागुरुस्थासन्ति प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः ॥ १२४ ॥ कस्तूरीयन्ति भाले तदनु नयनयोः कज्जलीयन्ति कर्णप्रान्ते नीलोत्पलीयन्त्युरसि मरकतालंकृतीयन्ति देव्याः । रोमालीयन्ति नाभेरुपरि हरिमणीमेखलीयन्ति मध्ये कल्याणं कुर्युरेते त्रिजगति पुरजित्कण्ठभासां विलासाः ॥ १२५ ॥ **शिरोमालिका** ॥ पित्रोः पादाब्जसेवागतगिरितनयापुत्रपत्रातिभीतक्षुभ्यद्भूषाभुजंगश्वसनगुरुमरुद्दीप्तनेत्राग्नितापात् । स्विद्यन्मौलीन्दुखण्डस्रुतबहुलसुधासेकसंजातजीवा पूर्वाधीतं पठन्ती ह्यवतु विधिशिरोमालिका शूलिनो वः ॥ १२६ ॥ **गणाः** ॥ संध्याताण्डवडम्बरप्रणयिनो देवस्य चण्डीपतेर्भ्रष्टाः पाण्डुविशीर्णमुण्डचयनव्यग्रा गणाः पान्तु वः । यैरौत्सुक्यवशीकृतैर्ग्रहगणाद्ग्राहौ गृहीते जवात्सूर्याचन्द्रमसोर्मिथः स्मितवतोर्जातं करास्फालनम् ॥ १२७ ॥ **नन्दी** ॥ कण्ठालंकारघण्टाघणघणरणिताध्मातरोदःकटाहः कण्ठेकालाधिरोहोचितघनसुभगंभावुकस्निग्धपृष्ठः । साक्षाद्धर्मो वपुष्मान्धवलककुदनिर्धूतकैलासकूटः कूटस्थो वः ककुद्मान्निबिडतरतमःस्तोमतृण्यां वितृण्यात् ॥ १२८ ॥ **ताण्डवम्** ॥ देवा दिक्पतयः प्रयात परतः खं मुञ्चताम्भोमुचः पातालं व्रज मेदिनीं प्रविशत क्षोणीतलं भूधराः । ब्रह्मन्मुञ्चय दूरमात्मभवनं नाथस्य नो नृत्यतः शंभोः संकटमेतदित्यवतु वः प्रोत्सारणा नन्दिनः ॥ १२९ ॥ दोर्दण्डद्वयलीलया चलगिरिभ्राम्यत्तदुच्चैरवध्वानोद्गीतजगद्भ्रमत्पदभरालोलत्फणाग्र्योरगम् । भृङ्गापिङ्गजटाटवीपरिसरोद्गङ्गोर्मिमालाचलच्चन्द्रं चारु महेश्वरस्य भवतां निःश्रेयसे ताण्डवम् ॥ १३० ॥ संध्याताण्डवडम्बरव्यसनिनो भर्गस्य चण्डभ्रमिव्यानृत्यद्भुजदण्डमण्डलभुवो झञ्झानिलाः पान्तु वः । येषामुद्धतताण्डवेन झटिति व्यूहेषु भूमीभृतामुड्डीनेषु बिडौजसा पुनरसौ दम्भोलिरालोकितः ॥ १३१ ॥ यस्यां मौलिमिलत्सु-

---

१ षडाननः. २ वाहनम्. मयूर इत्यर्थः. ३ पूरित. ४ द्यावापृथिव्यौ. ५ शंकरः. ६ सुभगं भवतीति तत्. ७ परिभूत. ८ निश्चलः. निर्विकारतया चिरजीवीत्यर्थः. ९ अज्ञाननिवहः. १० तृणसमूहः. ११ खादतु. १२ इन्द्रेण. १३ वज्रम्.

धांशुकलया संपूर्णबिम्बार्पितं भालावस्थितलोचनेन सहसैवालातचक्रायितम्। आवर्तायितमाकपर्दममरस्त्रोतस्वतीधारया पातु त्रीणि जगन्ति खण्डपरशोः सा ताण्डवाङ्गभ्रमिः ॥१३२॥ पादस्याविर्भवन्तीमवनतिमवने रक्षतः स्वैरपातैः संकोचेनैव दोष्णां मुहुरभिनयतः सर्वलोकातिगानाम्। दृष्टिं लक्ष्येषु नोग्रां ज्वलनकणमुचं बध्नतो दाहभीतेरित्याधारानुरोधात्त्रिपुरविजयिनः पातु वो दुःखनृत्यम् ॥ १३३ ॥ मूर्धव्याधूयमानध्वनदमरधुनीलोलकल्लोलजालोद्भूताम्भःक्षोदद म्भात्प्रसभमभिनभः क्षिप्तनक्षत्रलक्षम्। ऊर्ध्वन्यस्ताङ्घ्रिदण्डभ्रमिभवरभसोद्यन्नभस्वत्प्रवेशभ्रान्तब्रह्माण्डखण्डं प्रवितरतु शिवं शाम्भवं ताण्डवं वः ॥ १३४ ॥ शर्वाणीपाणितालैश्चलवलयझणत्कारिभिः श्लाघ्यमानं स्थाने संभाव्यमानं पुलकितवपुषा शंभुना प्रेक्षकेण। खेलत्पिञ्छालि केकाकलकलकलितं क्रौञ्चभिद्बर्हियूनो हेरम्बाकाण्डबृंहीतरलितमनसस्ताण्डवं त्वां धिनोतु ॥ १३५ ॥ पायादायासखेदक्षुभितफणिफणारत्ननिर्यन्निर्यच्छायामायापतङ्गद्युतिमुदितवियद्वाहिनीचक्रवाकम्। अभ्रान्ताभ्रान्तचूडातुहिनकरकरानीकनालीकनालच्छेदामोदानुधावद्बुधिरमिव खगे धूर्जटेस्ताण्डवं नः ॥ १३६ ॥ उच्चैरुत्तालखेलद्द्रुतजवनपवनोद्धूतशैलौघपातस्फारोदञ्चत्पयोधिप्रकटितमुकुटस्वर्धुनीसंगमानि। प्रीयासुस्ताण्डवानि स्फुटविकटजटाकोटिसंघट्टिभूरिभ्राम्यन्नक्षत्रचक्रव्यवसितसुमनोवृष्टिपातानि शंभोः ॥ १३७ ॥ देवस्त्रैगुण्यभेदात्सृजति वितनुते संहरत्येष लोकानस्यैव व्यापिनीभिस्तनुभिरपि जगद्व्याप्तमष्टाभिरेव। वन्द्यो नास्येति पश्यन्निव चरणगतः पातु पुष्पाञ्जलिर्वः शंभोर्नृत्यावतारे वलयमणिफणाफूत्कृतैर्विप्रकीर्णः ॥ १३८ ॥ अर्धनारीश्वरः ॥ मन्दारमालाकुलितालकायै कपालमालाङ्कितशेखराय। दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय ॥ १३९ ॥ एकः स्तनस्तुङ्गतरः परस्य वार्तामिव प्रष्टुमगान्मुखाग्रम्। यस्याः प्रियार्धस्थितिमुद्वहन्त्याः सा पातु वः पर्वतराजपुत्री ॥ १४० ॥ यस्योपवीतगुण एव फणावृतैकवक्षोरुहः कुचपटीयति वामभागे। तस्मै ममास्तु तमसामवसानसीम्ने चन्द्रार्धमौलिशिरसे महसे नमस्या ॥ १४१ ॥ स्वेदार्द्रवामकुचमण्डनपत्रभङ्गसंशोषिदक्षिणकराङ्गुलिभस्मरेणुः। स्त्रीपुंनपुंसकपदव्यतिलङ्घिनी वः शंभोस्तनुः सुखयतु प्रकृतिश्चतुर्थी ॥ १४२ ॥ संभोगानतिरिच्यमानविभवो यद्विप्रलम्भो रसस्तद्दिव्यं मिथुनं परस्परपरिष्वक्तं नमस्कुर्महे। एकस्याः प्रतिबिम्बसंभृतविपर्यासे मुहुर्दर्पणे सव्याङ्गस्थितिकौतुकं शमयति स्वामी स यत्रापरः ॥ १४३ ॥ स्वच्छन्दैकस्तनश्रीरुभयदलमिलन्मौलिचन्द्रः फणीन्द्रप्रा-

१ पृथिव्याः. २ यथेष्टं क्षेपणैः. ३ अतिक्रान्तचतुर्दशभुवनानाम्. ४ आधारस्य पृथिव्यादेरनुरोधादनुसारात्. ५ कणाः. ६ पार्वती. ७ उचितम्. ८ बर्हपङ्क्तयः. ९ षडाननः. १० अकालेभवम्. ११ गर्जितम्. १२ क्षुब्धचेतसः. मेघनिर्घोषभ्रान्त्येति भावः. १३ प्रक्षेपः. १४ सुरसरित्. १५ बाणः. १६ कञ्चुकीभवति.

वीनावीतवाही सुखयतु भगवानर्धनारीश्वरो वः। यस्यार्धे विश्वदाहव्यसनविसृमरज्योतिरर्धे कृपोद्यद्बाष्पं चान्योन्यवेगप्रहतिसिमसिमाकारि चक्षुस्तृतीयम् ॥ १४४ ॥

---

## पार्वती।

हरकण्ठग्रहानन्दमीलिताक्षीं नमाम्युमाम्। कालकूटस्य संस्पर्शाज्जातमूर्च्छागमामिव ॥ १ ॥ पार्वतीमोषधीमेकामपर्णां मृगयामहे। शूली हालाहलं पीत्वा यया मृत्युंजयोऽभवत् ॥ २ ॥ अपर्णेव लता सेव्या विद्वद्भिरिति मे मतिः। यथा वृत्तः पुराणोऽपि स्थाणुः सूतेऽमृतं फलम् ॥ ३ ॥ मृणालव्यालवलया वेणीबन्धकपर्दिनी। हरानुकारिणी पातु लीलया पार्वती जगत् ॥ ४ ॥ जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका। सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा ॥ ५ ॥ तपस्वी कां गतोऽवस्थामिति स्मेराननाविव। गिरिजायाः स्तनौ वन्दे भवभूतिसिताननौ ॥ ६ ॥ चण्डीजङ्घाकाण्डः शिरसा चरणस्पृशि प्रियेे जयति। शंकरपर्यन्तजितो वीरस्तम्भः स्मरस्येव ॥ ७ ॥ उन्नालनाभिपङ्केरुह इव येनावभाति शंभुरपि। जयति पुरुषायितायास्तदाननं शैलकन्यायाः ॥ ८ ॥ अङ्कनिलीनगजाननशङ्काकुलबाहुलेयहृतवसनौ। सस्मितहरकरकलितौ हिमगिरितनयास्तनौ जयतः ॥ ९ ॥ कण्ठोचितोऽपि हुंकृतिमात्रनिरस्तः पदान्तिके पतितः। यस्याश्चन्द्रशिखः स्मरभल्लनिभो जयति सा चण्डी ॥ १० ॥ शिरसि धृतसुरापगे स्मरारावरुणमुखेन्दुरुचिर्गिरीन्द्रपुत्री। अथ चरणयुगानते स्वकान्ते स्मितसरसा भवतोऽस्तु भूतिहेतुः ॥ ११ ॥ तद्वः प्रमार्ष्टु विपदः प्रणतार्तिहन्त्र्या न्यस्तं पदं महिषमूर्धनि चण्डिकायाः। वैरी यदीयनखरांशुपरीतशृङ्गः शक्रायुधाङ्कितनवाम्बुधरप्रभोऽभूत् ॥ १२ ॥ श्रुत्वा षडाननजनुर्मुदितान्तरेण पञ्चाननेन सहसा चतुराननाय। शार्दूलचर्म भुजगाभरणं सभस्म दत्तं निशम्य गिरिजाहसितं पुनातु ॥ १३ ॥ पञ्चास्यपञ्चदशनेत्रपिधानदक्षा दाक्षायणीमृदुकराः कृतिनः पुनन्तु। द्वौ वल्लकीं कथमकेति च वादयन्तावष्टादशोऽपि घटयन्स्तुतमौनमुद्राम् ॥ १४ ॥ आनन्दमेदुरपुरंदरमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य। पादाम्बुजं भवतु वो विजयाय मञ्जु मञ्जीरराजितमनोरममम्बिकायाः ॥ १५ ॥ ब्रह्मादयोऽपि यदपाङ्गतरंगभङ्ग्या सृष्टिस्थितिप्रलयकारणतां व्रजन्ति। लावण्यवारिनिधिवीचिपरिप्लुतायै तस्यै नमोऽस्तु सततं

---

१ यज्ञोपवीतम्. २ प्रसारी. ३ पर्वतसंबन्धिनीम्; (पक्षे) पर्वतपुत्रीम्. ४ पर्णरहिताम्; (पक्षे) एतन्नाम्नीं पार्वतीम्. ५ शूलरोगवान्; (पक्षे) त्रिशूलधारी. ६ मृत्युनाशकः; (पक्षे) एतन्नाम्ना प्रसिद्धः शिवः. ७ स्वतः सुखविशेषजनकतया तुच्छविषयपराङ्मुखस्याप्येतादृश्यवस्थासंपादनादिति भावः. ८ स्तनयोः कुम्भिकुम्भसाम्यादिति भावः. ९ कथं मां विहायैनमेव संगोप्य बहुकालं स्तन्यं प्रयच्छतीति धियेति भावः. १० कार्तिकेयः. ११ गजाननिर्णयार्थमिति भावः. १२ आलिङ्गनार्होऽपि; (पक्षे) अर्धचन्द्राकारतया कण्ठलक्ष्ययोग्योऽपि. १३ न तु करतर्जनादिना; (पक्षे) बाणादिना. १४ प्रणामार्थमिति भावः; (पक्षे) वेगवशादिति भावः.

हरवल्लभायै ॥ १६ ॥ ज्याकृष्टिबद्धखटिकामुखपाणिपृष्ठप्रेङ्खन्नखांशुचयसंवलितोऽम्बिकायाः । त्वां पातु मञ्जरितपल्लवकर्णपूरलोभभ्रमद्भ्रमरविभ्रमभृत्कटाक्षः ॥ १७ ॥ प्रचण्डचण्डमुण्डयोर्महाबलैकखण्डिनी ह्यनेकरुण्डमुण्डयुग्रणे बलैकदायिनी । कचित्स्वशक्तिकारिणी रमाविलासदायिनी मुदेऽस्तु कालिका सदा समस्तपापहारिणी ॥ १८ ॥ पुरारितनुहारिणी दुरितसंघसंहारिणी भजन्मतिविवर्धिनी प्रबलदानवोन्मर्दिनी । तुषारगिरिनन्दिनी मुनिहृदन्तरालम्बिनी कुमारमुखचुम्बिनी हरनितम्बिनी पातु वः ॥ १९ ॥ सत्त्वादिस्थैरगणितगुणैर्हन्त विश्वं प्रसूय व्यक्तं धत्ते प्रहसनकरी या कुमारीति संज्ञाम् । मोहध्वान्तप्रसुरविरतिर्विश्वमूर्तिः समन्तादाद्या शक्तिः स्फुरतु मम सा दीपवद्देहगेहे ॥ २० ॥ वहन्ती सिन्दूरं प्रबलकबरीभारतिमिरत्विषां वृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम् । तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरीपरीवाहस्रोतःसरणिरिव सीमन्तसरणिः ॥ २१ ॥ औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः । दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥ २२ ॥ आदौ प्रेमकषायिता हरमुखव्यापारलोला शनैर्व्रीडाभारविघूर्णिता मुकुलिता धूमोद्गमव्याजतः । पत्युः संमिलिता दृशा सरभसव्यावर्तनव्याकुला पार्वत्याः परिणीतिमङ्गलविधौ दृष्टिः शिवायास्तु वः ॥ २३ ॥ [1]प्रत्यासन्नविवाहमङ्गलविधौ देवार्चनव्यग्रया दृष्ट्वाग्रे [2]परिणेतुरेव लिखितां गङ्गाधरस्याकृतिम् । [3]उन्मादस्मितरोषलज्जितधिया गौर्या कथंचिच्चिराद्वृद्धस्त्रीवचनात्प्रिये विनिहितः पुष्पाञ्जलिः पातु वः ॥ २४ ॥ [4]रामाद्याचय मेदिनीं [5]धनपतेर्बीजं [6]बलाल्लाङ्गलं [7]प्रेतेशान्महिषं तवास्ति वृषभः [8]फालं त्रिशूलं तव । शक्ताहं तव चान्नदानकरणे [9]स्कन्दोऽस्ति गोरक्षणे खिन्नाहं हर भिक्षया कुरु कृषिं गौरीवचः पातु वः ॥ २५ ॥ हे हेरम्ब किमम्ब रोदिषि कथं कर्णौ लुठत्यग्निभूः किं ते स्कन्द विचेष्टितं मम पुरा संख्या कृता चक्षुषाम् । नैतत्तेऽप्युचितं गजास्य चरितं नासां मिमीतेऽम्ब मे तावेवं सहसा विलोक्य हसितव्यग्रा शिवा पातु वः ॥ २६ ॥ मातस्तातजटासु किं सुरसरित्किं शेखरे चन्द्रमाः किं भाले हुतभुग्लुठत्युरसि किं नागाधिपः किं कटौ । कृत्तिः किं जघनद्वयान्तरगतं यद्दीर्घमालम्बते श्रुत्वा पुत्रवचोऽम्बिका स्मितमुखी लज्जावती पातु वः ॥ २७ ॥ धूमव्याकुलदृष्टिरिन्दुकिरणैराह्लादिताक्षी पुनः पश्यन्तीव समुत्सुका नतमुखी भूयो ह्रिया ब्रह्मणः । सेर्ष्या पादनखेन्दुदर्पणगते गङ्गां दधाने हरे स्पर्शादुत्पुलका करग्रहविधौ गौरी शिवायास्तु वः ॥ २८ ॥ [10]गोनासाय नियोजितागदरजाः सर्पाय बद्धौषधिः कण्ठस्थाय विषाय वीर्यमहतः पाणौ मणीन्बिभ्रती । भर्तुर्भूतगणाय गोत्र[11]जरतीनिर्दिष्टमन्त्राक्षरा रक्षत्वद्रिसुता

१ समीपवर्ती. २ भर्तुः. ३ चित्तविभ्रमः. ४ परशुरामात्. ५ कुबेरात्. ६ बलभद्रात्. ७ यमात्. ८ कृषकः. ९ स्कन्दः. १० गोनासातिरिक्तसर्पभयनिवृत्तय इत्यर्थः. गोनासः सर्पजातिविशेषः. ११ वृद्धा.

विवाहसमये प्रीता[1] च भीता च वः ॥ २९ ॥ स्वेदस्यन्दितसान्द्रचन्दनचयं दोर्वल्लिबन्धश्रमादूर्ध्वश्वासपरिस्खलत्स्मरकथं संदष्ट[3]दन्तच्छदम् । सीत्कारा[4]ञ्चितलोचनं सपुलकं भ्रान्तभ्रु नृत्यत्करं पार्वत्यां सुरतं मुदे रसवतामास्तां मृडानीपतेः ॥ ३० ॥ स्वेदस्ते कथमीदृशः प्रियतमे त्वन्नेत्रवह्नेर्विभो कस्माद्वेपितमेतदिन्दुवदने भोगीन्द्रभीतेर्भव । रोमाञ्चः[5] कथमेष देवि भगवन्गङ्गाम्भसां सीकरैरित्थं भर्तरि [6]भावगोपनपरा गौरी चिरं पातु वः ॥ ३१ ॥ शम्याकस्य रजः प्रमृज्य चरणे दत्तो मया यावको[7] निर्मृज्य स्तनकुड्मले च भसितं[8] पत्राङ्कुरो निर्मितः । स्वच्छन्दं विहरेति जल्पितगिरं साकूतमालीजनं दृष्ट्वा केवलमाघ्नती कुटिलया दाक्षायणी पातु वः ॥ ३२ ॥ वक्त्रं शीतकरोऽधरो घनरसः[9] कामप्रदो विग्रहः[10] श्वासो गन्धवहः सरोरुहसुहृत्[11]पाणिः स्मिताभा[12] शुचिः । वक्षः पीनपयो[13]धरा[14]धिकरणं पृथ्वी नितम्बस्थलीत्यष्टौ धूर्जटिमूर्तयः स्मरभयाद्दुर्गाश्रिताः पान्तु वः ॥ ३३ ॥ पादाग्रस्थितया मुहुः स्तनभरेणानीतया नम्रतां शंभोः सस्पृहलोचनत्रयपथं यान्त्या तदाराधने । ह्रीमत्या शिरसीहितैः[15] सपुलकस्वेदोद्गमोत्कम्पया विश्लिष्यन्कुसुमाञ्जलिर्गिरिजया क्षिप्तोऽन्तरे पातु वः ॥ ३४ ॥ कैलासालयभाललोचनरुचा निर्वर्तितालक्तकव्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम् । स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः कान्तिः कोकनदा[16]नुकारसरसा सद्यः समुत्सार्यते ॥ ३५ ॥ लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तःकपोलस्थलम् । पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितव्रीडया प्रोन्मृष्टः करपल्लवेन कुटिलाताम्रच्छविः पातु वः ॥ ३६ ॥ सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि । सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥ ३७ ॥ भिक्षुः क्वास्ति बलेर्मखे पशुपतिः किं नास्त्यसौ गोकुले मुग्धे पन्नगभूषणः सखि सदा शेते च तस्योपरि । आर्ये मुञ्च विषाद[17]माशु कमले नाहं प्रकृत्या चला[18] चेत्थं वै गिरिजासमुद्रसुतयोः संभाषणं पातु वः ॥ ३८ ॥ हे गङ्गाधरपत्नि चक्रिवधु किं कुत्रास्त्यसौ नर्तको वृन्दारण्यभुवि क्व सर्पकुतुकी स्यात्कालियस्य ह्रदे । भिक्षुः कुत्र गतोऽस्ति यज्ञसदने क्वासौ विषादी बकीक्रोडे स्यादिति पद्मजागिरिजयोर्वाग्भङ्गयः पान्तु वः ॥ ३९ ॥ वेणीबन्धकपर्दिनी सिततनुः श्रीखण्डपांशूत्करैः केतक्येकदलेन्दुभृद्विलसता व्यालोपवी-

१ यावज्जीवं कृततपसः फलोन्मुखत्वं समीक्ष्येत्यर्थः. २ भूतगणादिसाहित्यमालोक्येत्यर्थः. ३ चुम्बितावित्यर्थः. ४ निमीलित. ५ सात्विकाविर्भावसूचकं रोमहर्षणम्. ६ स्वाभिप्राय. ७ लाक्षारस. ८ भस्म. ९ उदकम्. १० शरीरम्. यजमानरूपम्. ११ कमलानां मित्रम्. सूर्य इत्यर्थः; पाणिपक्षे सरोरुहानां सदृशा कान्तिर्यस्य. १२ तेजस्. १३ स्तनौ; (पक्षे) मेघाः. १४ स्थानम्. आकाशं मेघानां स्थानमिति प्रसिद्धम्. १५ इष्टः. १६ रक्तोत्पलम्. १७ खेदम्; (पक्षे) विषमत्तीति विषादस्तं शिवम्. १८ चञ्चला; (पक्षे) लक्ष्मीः.

तिन्यपि । प्राक्पाणिग्रहणाद्विनोदरभसा सख्याः पुरो लीलया कुर्वाणानुकृतिं हरस्य दिशतु श्रेयांसि वः पार्वती ॥ ४० ॥ यस्याङ्घ्रिद्वितयं नमन्ति विबुधाः स त्वेककः सर्ववित्तं मृत्युंजयमामनन्ति मुनयः सोऽद्यापि यातिव्रताः । इत्याकर्ण्य कथां रहस्यपि यया पार्श्वे विवाहात्पुरा भङ्क्त्वाङ्गानि विजृम्भितं गिरिभुवो मोट्टायितं पातु वः ॥ ४१ ॥ दुर्गा दानवनाशिनी हरजटाश्रेणी व्ययोल्लासिनी वीणाशङ्खकरालतोमरधरामुण्डप्रचण्डाधरा । रक्तोल्लासितरक्तबीजमथिनी भक्तिः सदानन्दिनी पायात्सा परमेश्वरी प्रतिदिनं कल्याणमुक्तिप्रदा ॥ ४२ ॥ संध्यारागवती स्वभावकुटिला गङ्गा द्विजिह्वः फणी वक्राङ्गैर्मलिनः शशी कविमुखो नन्दी च मूकी वृषः । इत्थं दुर्जनसंकटे पतिगृहे वस्तव्यमेतत्कथं गौरीत्थं नृकपालपाणिकमला चिन्तान्विता पातु वः ॥ ४३ ॥ भिक्षार्थी स क्व यातः सुतनु बलिमखे ताण्डवं क्वाद्य भद्रे मन्ये वृन्दावनान्ते क्व नु स मृगशिशुर्नैव जाने वराहम् । बाले कच्चिन्न दृष्टो जरठवृषपतिर्गोप एवास्य वेत्ता लीलासंलाप इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां नः ॥ ४४ ॥ दीप्तक्षुद्वेगयोगाद्दहनलहलहल्लम्बजिह्वाग्रलीढब्रह्माण्डक्षौद्रबिन्दुप्रबलतरभवज्जाठराग्निस्फुलिङ्गाम् । कालीं कङ्कालशेषामतुलगलचलन्मुण्डमालाकरालां गुञ्जासंवादिनेत्रामजिननिवसनां नौमि पाशासिहस्ताम् ॥ ४५ ॥ उद्वाहारोपिताद्राक्षतनिजपदयोः संगतामिन्दुमौलावानम्रेयां सुधांशोर्व्यधित किल कलां तूर्णमेवान्नपूर्णाम् । सक्तानामक्षतानाममृतदृगनलोपाधितः पक्वभावान्नानार्थैरन्नपूर्णाप्रणतजनततेः पूर्णतामातनोतु ॥ ४६ ॥ जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः । भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापीसंभृताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥ ४७ ॥ विद्राणे रुद्रवृन्दे सवितरि तरले वज्रिणि ध्वस्तवज्रे जाताशङ्के शशाङ्के विरमति मरुति त्यक्तवैरे कुबेरे । वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषं पौरुषोपघ्ननिघ्नं निर्विघ्नं निघ्नती वः शमयतु दुरितं भूरिभावा भवानी ॥ ४८ ॥ वक्षःपीठे निरीक्ष्य स्फटिकमणिशिलामण्डले स्वच्छभासि स्वच्छायां साभ्यसूया त्वमियमिति मुहुः सत्यमाश्वासितापि । वामे मे दक्षिणेऽस्याः श्रवसि कुवलयं नाहमित्यालपन्ती दत्ताश्लेषा सहासं मदनविजयिना पार्वती वः पुनातु ॥ ४९ ॥ या वाचः साधुतायास्त्रिभुवनभुवनस्याङ्गने संचरन्ती वामांसासक्तवीणाध्वनिगणाविलसन्मूर्छनानन्दपूर्णा । संतोषोल्लासिमौलिः स्फुरदमलमणिः स्वर्णताटङ्कभूषा विभ्राजत्सास्मितास्या भवतु भवमुदे भव्यता मे भवानी ॥ ५० ॥ सिंहारूढैकपादा दशभुजविलसच्चापचर्मासिचक्रप्रोद्यत्पाशाङ्कुशालीदरवरविलसत्तर्जनीबाणरम्या । घ्नन्ती शूलेन वक्षस्य-

---

१ जीर्ण. २ पलायिते. ३ पौरुषोपघ्नानां पराक्रमिणां निघ्न आयत्ततरम्. ४ प्रभूतप्रभावा. ५ स्वप्रतिबिम्बम्. ६ सेर्ष्या. ७ कर्णे.

खण्डिता दूरादन्तरिता विधाय कलहं हा विप्रलब्धा विधे ॥ २३० ॥ प्रामाण्यं स्वत एव नैव परतो विज्ञायते मानता शब्दस्यापि यथार्थता स्तुतिवचोराशेर्मनोवृत्तयः। विश्वव्यापकतां गतो न च महानन्यो भ्रमः क्वापि ते नास्त्ये देव मतं किमस्ति भवतः शास्त्रेषु न ज्ञायते ॥ २३१ ॥ प्रामाण्यं परतः स्वतोऽपि भवतो विज्ञायते सन्मते भूमीन्द्र प्रचुरक्षणस्थिरतया वर्णाश्चिरं स्थापिताः। सर्वज्ञैकसदीश्वरोऽपि न परं ब्रूते भवानीश्वरं तन्नैयायिकनायकस्य भवतो मीमांसकत्वं कुतः ॥ २३२ ॥ एकं वस्तु यदस्ति विश्वजनतानन्दप्रमोदात्मकं सत्यं तत्त्वमसीति वाक्यमखिलं त्वय्येव विश्राम्यति। त्वामाकर्ण्य न किंचिदन्यदवनीशृङ्गार भो मन्यते त्वय्याप्ते जनकादिकीर्तिजनके किं ज्ञानमीमांसया ॥ २३३ ॥ त्वद्बाणेषु यमो जयेषु नियमो पाते स्थिरं चासनं भ्रान्तौ श्वासविनिग्रहो गुणगणे प्रत्याहृतिः श्रीमतः। ध्यानं शूलिनि धारणा च धरणेर्धर्मे समाधिर्यतस्तन्निर्विण्णहृदः किमीश्वरपरे वाञ्छन्ति पातंजले ॥ २३४ ॥ दृष्टान्तो न तवास्ति वाचि न च ते संदेहलेशः क्वचिद्व्याजोक्तिर्न कदापि शास्त्रकलने नैवानुमाने रुचिः। सामान्यं च विशेषवन्न मनुषे नाक्षेपबुद्धिर्मनाग्व्याघातोऽपि न वा मुखेऽप्यथ कथं साहित्यतर्कज्ञता ॥ २३५ ॥ मेघो भाति जलेन गौस्तु पयसा विद्वन्मुखं भाषया तारुण्येन च कामिनी मधुरया वाण्या पिकः खं जलात्। मालिन्यान्नयनं श्रिया च सदनं ताम्बूलरागान्मुखं ब्रह्माण्डं सकलं त्वया नरपते भाति स्म चित्रं महत् ॥ २३६ ॥ दारिद्र्योपहतो यथा घनघनं चान्द्रीं चकोरः प्रभां कामार्तस्तरुणीं क्षुधापरिगतः सद्व्यञ्जनं भोजनम्। सच्छिष्यः स्वगुरुं वियोगविधुरो वत्सो यथा मातरं तद्वद्वः सततं स्मरामि मनसा मद्वत्सलाञ्श्रीमतः ॥ २३७ ॥ लक्ष्मीस्ते सदने सदा विहरतां वित्ते च चिन्तामणिः स्वर्धेनुस्तव गोकुले सुरतरुश्चारामभूमौ तव। वाणी ते वदने दया नयनयोर्दानं करे चान्वहं विष्णुश्चेतसि ते मतिश्च वसतां कीर्तिश्च लोकत्रये ॥ २३८ ॥ त्वामुर्वीधर चित्रकाव्यकरणे सेनागणो भाषणे त्राणे व्याकरणे रणे वितरणे विश्वंभराभूषणे। सत्यं सत्यवतीभवे[1] शरभवे[2] वागीशवे[3] विष्णवे दाक्षीकुक्षिभवे[4] पृथोदरभवे[5] देवद्रुवे मेरवे ॥ २३९ ॥ गङ्गायत्यसितापगा फणिगणः शेषीयति श्रीपतिः श्रीकण्ठीयति कैरवीयति कुलं नीलोत्पलानां च वै। कर्पूरीयति कज्जलं पिककुलं लीलामरालीयति स्वःकुम्भीयति कुम्भिनामपि घटा त्वत्कीर्तिसंघट्टतः ॥ २४० ॥ लक्ष्मीस्ते हृदि भारती च वदने मौलौ सदा केशवश्चण्डी ते भुजदण्डयोर्गुणनिधे गेहे कुबेरस्थितिः। चित्तं नाथ तवास्तु धर्मसदने दानप्रसंगः करे सर्वास्ते विपदः प्रयान्तु विपिने त्वं दीर्घजीवी भव ॥ २४१ ॥ आयुस्ते नरवीर वर्धतु सदा हेमन्तरात्रिर्यथा लोकानां प्रियवर्धनो भव सदा हेमन्तसूर्यो यथा। लोकानां भयवर्धनो

---

१ व्यासाय. २ षडाननाय. ३ बृहस्पतये. ४ पाणिनये. ५ अर्जुनाय.

भव सदा हेमन्ततोयं यथा नाशं यान्तु तवारयोऽपि सततं हेमन्तपद्मं यथा ॥ २४२ ॥ इन्दुं कैरविणीव काकपटलीवाम्भोजिनीवल्लभं मेघं चातकमण्डलीव मधुपश्रेणीव पङ्केरुहम् । माकन्दं पिकसुन्दरीव सरसीं हंसीव विद्वत्प्रभो चेतोवृत्तिरियं ममापि नृपते त्वां द्रष्टुमुत्कण्ठते ॥ २४३ ॥ सत्यासक्तमनाः प्रवृद्धनरकच्छेदी द्विजेन्द्राश्रयो युक्तानेकमुखोद्भवास्पदमलं श्रीर्यत्र संराजते । यो गङ्गां च बिभर्ति यश्च सशिवो यः कामदेवाश्रयः संघः साम्यमयं प्रयातु भवतां कृष्णेन रुद्रेण वा ॥ २४४ ॥ यद्बाहू वहतः पराक्रमहृतां प्रत्यर्थिसीमन्तिनीचक्षुःकज्जलकालिकामिव धनुर्मौर्वीकिणश्यामिकाम् । यद्दोर्दुर्मदकर्मकार्मुकगुणप्रोत्तालकोलाहलैर्वैरिस्त्रीकलमेखलाकलकलाः पीता इवास्तं गताः ॥ २४५ ॥ सौन्दर्यं मदनादपि प्रथयति प्रौढिप्रकर्षं पुरां भेत्तारं मदनारिमप्यधरयत्युद्दामदोःक्रीडितम् । मुग्धत्वं मदनारिमौलिशशिनोऽप्युत्कर्षमालम्बते मूर्तैस्तत्किमसौ रसैर्विरचितः शृङ्गारवीराद्भुतैः ॥ २४६ ॥ आदाय प्रतिपक्षकीर्तिनिवहान्ब्रह्माण्डभूषान्तरे निर्विघ्नं धमता नितान्तमुदितैः स्वैरेव तेजोऽग्निभिः । तत्तादृक्पुटपाकशोधितामिव प्राप्तं गुणोत्कर्षिणा पिण्डस्थं च महत्तरं च भवता निःक्षारतारं यशः ॥ २४७ ॥ व्यास्यं[1] नैकतयास्थितं श्रुतिगणं[2] जन्मी[3] न वल्मीकतो नाभौ[4] नाभवमच्युतस्य सुमहद्भाष्यं च नाभाषिषम्[5] । चित्रार्थां न बृहत्कथाम[6]चकथं सुत्राम्णि[7] नासं गुरु[8]र्देव त्वद्गुणवृन्दवर्णनमहं कर्तुं कथं शक्नुयाम् ॥ २४८ ॥ एकाभूत्कुसुमायुधेषुधिरिव प्रव्यक्तपुङ्खावली जेतुर्मङ्गलपालिकेव पुलकैरन्या कपोलस्थली । लोलाक्षीं क्षणमात्रभाविविरहक्लेशासहां पश्यतो द्रागाकर्णयतश्च वीर भवतः प्रौढाहवाडम्बरम् ॥ २४९ ॥ येषां दोर्बलमेव दुर्बलतया ते संमतास्तैरपि प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः । ये क्ष्माशक्र पुनः पराक्रमनयस्वीकारकान्तक्रमास्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ॥ २५० ॥ अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधयस्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः । आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुवस्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥२५१॥ येषां कण्ठपरिग्रहप्रणयितां संप्राप्य धारा[10]धरस्तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं[11] पराप्नोति च । तेषां संगररङ्गसक्तमनसां राज्ञां त्वया भूपते पांशूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥ २५२ ॥ दृष्ट्याकीर्तिकलिन्द[12]शैलसुतया नद्यास्य यद्दोर्द्वयीकीर्तिश्रेणिमयी समागममगाद्गङ्गा रणप्राङ्गणे । तत्तास्मिन्विनिमज्य बाहुजभटै[13]रारम्भि[14] रम्भापरीरम्भानन्दनिकेतनन्दनवनक्रीडादराडम्बरः ॥२५३॥ अस्मिन्दिग्विजयोद्यते पतिरयं मे स्तादिति ध्यायति कम्पं[15] सात्विकभावम[16]ञ्चति रिपुक्षोणी-

१ अनेकशाखारूपेण न विस्तारितवान्. तत्कर्ता व्यासो न भवामीत्यर्थः. २ वेदसमूहम्. ३ नाहं वाल्मीकिरित्यर्थः. ४ नाहं चतुर्मुख इत्यर्थः. ५ नाह सहस्रजिह्व इत्यर्थः. ६ नाहं गुणाढ्य इत्यर्थः. ७ इन्द्रे. ८ नाहं वाचस्पतिरित्यर्थः. ९ विस्तीर्णाः. १० खड्गम्. ११ तैलादि; (पक्षे) मित्रत्वम्. १२ यमुनया. १३ क्षत्रियभटैः. १४ एतद्विरोधिनां मरणमेव शरणमिति भावः. १५ औत्पातिके भूकम्पे सात्विकोत्प्रेक्षा. १६ प्राप्नोति.

न्द्रदारा धरा । अस्यैवाभिमुखं निपत्य समरे यास्यद्भिरूर्ध्वं[1] निजः पन्था[2] भास्वति[3] दृश्यते बिलमयः प्रत्यर्थिभिः पार्थिवैः ॥ २५४ ॥ विद्राणे रणचत्वराद्[4]अरिगणे त्रस्ते समस्ते पुनः कोपात्कोऽपि निवर्तते यदि भटः कीर्त्या जगत्युद्भटः[5] । आगच्छन्नपि संमुखं विमुखताम्[6]एवाधिगच्छत्यसौ द्रागेतच्छुरिकारयेण ठणिति[7] छिन्नापसर्पच्छिराः ॥ २५५ ॥ हित्वा दैत्यरिपोः[8] उरः स्वभवनं शून्यत्वदोष[9]स्फुटासीदन्मर्कटकीट[10]कृत्रिमसितच्छत्रीभवत्कौस्तुभम् । उज्झित्वा निजसद्म पद्ममपि तद्वच्चक्रावनद्धीकृतं[11] लूतातन्तुभिरन्तरद्य भुजयोः श्री[12]रस्य विश्राम्यति ॥ २५६ ॥ सिन्धोर्जैत्र[13]मयं पवित्रमसृजत्तत्कीर्तिपूर्ता[14]द्भुतं यत्र स्नान्ति जगन्ति सन्ति कवयः के वा न वाचंयमाः[15] । यद्बिन्दुश्रियमिन्दुरञ्चति जलं चाविश्य दृश्येतरो[16] यस्यासौ[17] जलदेवतास्फटिकभूर्जागर्ति यागेश्वरः ॥ २५७ ॥ युद्धा चाभिमुखं रणस्य चरणस्यैवा[18]दसीयस्य वा बुद्ध्वान्तः स्वपरान्तरं निपततामुन्मुच्य बाणावलीः । छिन्नं वा[19]वनतीभवन्निजभियः खिन्नं भरेणा[20]थवा राज्ञानेन हठाद्विलोठितम्[21]अभूद्भूमावरीणां शिरः ॥ २५८ ॥ राज्ञामस्य शतेन किं कलयतो हेतिं[22] शतघ्नीं कृतं[23] लक्षैर्लक्ष[24]भिदो दृशैव जयतः पद्मानि[25] पद्मैरलम्[26] । कर्तुं सर्वपरच्छिदः[27] किमपि नो शक्यं परार्धेन[28] वा तत्संख्या[29]पगमं विनास्ति न गतिः काचिद्भुतैतद्द्विषाम् ॥ २५९ ॥ क्षीरोदन्वदपः प्रमथ्य[30] मथिता[31]देशे[32]ऽमरैर्निर्मिते[33] स्वाक्रम्यं[34] सृजतस्तदस्य यशसः क्षीरोदसिंहासनम् । केषां नाजनि वा जनेन जगतामेतत्कवित्वामृतस्रोतःप्रोत[35]पिपासुकर्णकलसीभाजाभिषेकोत्सवः ॥ २६० ॥ निस्त्रिंश[36]त्रुटितारिवारणघटाकुम्भास्थिकूटा[37]वट[38]स्थानस्थायुक[39]मौक्तिकोत्कर[40]किरः कैरस्य नायं करः । उन्नीत[41]श्चतुरङ्गसैन्यसमरत्व[42]ङ्गत्तुरंगक्षुरक्षुण्णासु[43] क्षितिषु क्षिपन्निव[44] यशःक्षौणीज[45]बीजव्रजम् ॥ २६१ ॥ यत्कस्यामपि भानु[46]मान्न ककुभि स्थेमान[47]मालम्बते जातं यद्वनकाननैकशरणप्राप्तेन दावाग्निना । एषैतद्भुजतेजसा विजितयोस्तावत्तयोरौचिती[48] धिक्कं वाडवमम्भसि[49] द्विषिभिया येन प्रविष्टं पुनः ॥ २६२ ॥ आत्मन्यस्य संमुच्चितीकृतगुणस्या[50]होतरामौचिती यद्राात्रान्तरवर्जनाद्[51]ऐजनयद्रूजानि-

१ ऊर्ध्वलोकम्. २ आसन्नमृत्योरादित्यमण्डलं सच्छिद्रमिव दृश्यते. ३ सूर्यमण्डले. ४ रणाङ्गणात्. ५ प्रसिद्धः. ६ पराङ्मुखत्वम्; (पक्षे) विगतमुखत्वम्. ७ ठणिति कश्चिदनुकरणशब्दः. ८ विष्णोः. ९ रिक्तता-दोषः. १० तन्तुवायकीटाः. ११ बद्धम्. १२ लक्ष्मीः. १३ जेतृ जयशीलम्. ततोऽप्यधिकमित्यर्थः. १४ खातम्. १५ सर्वेऽपि कवयो मौनिनो भवन्ति. वर्णयितुमशक्यत्वादिति भावः. १६ सावर्ण्याददृश्या. १७ इन्दुः. १८ अमुष्य. १९ नम्रीभवत्. २० भारेण. २१ परिवर्तितम्. २२ आयुधम्. २३ अलम्. २४ लक्षसंख्या; (पक्षे) शरव्यम्. २५ पद्मसंख्या; (पक्षे) अब्जानि. २६ पद्मसंख्याभिः. २७ शत्रुच्छिदः. २८ परार्धसंख्यया; (पक्षे) परेषामरीणामर्धेन. २९ एकत्वादिः; (पक्षे) युद्धम्. ३० विलोड्य. ३१ मथनोद्भूतो निर्जलो दधिक्षीरविकारः. ३२ रूपान्तरे. ३३ रूपान्तरापादानेन क्षीराब्धावभावं गमिते सतीत्यर्थः. ३४ स्वेनाक्रमणार्थम्. ३५ पूरिते. ३६ खड्गः. ३७ संघातः. ३८ गर्तप्रदेशः. ३९ स्थायिनः. ४० समूहः. ४१ उत्प्रेक्षितः. ४२ संचरत्. ४३ कृष्टासु. ४४ वपन्निव. ४५ वृक्षः. ४६ सूर्यः. ४७ स्थिरत्वम्. ४८ औचित्यम्. ४९ अम्भेर्जलं सहजद्वेषि तस्मिन्. ५० समाहृतगुणस्य. ५१ दण्डनमकरोदित्यर्थः.

रेष द्विषाम् । भूयोऽहंक्रियते स्म येन च हृदा स्कन्धो न यश्चानमत्तन्मर्माणि दलंदलं[1] सं-मिदलंकर्मीणबाणव्रजः[2] ॥ २६३ ॥ यद्भर्तुः कुरुतेऽभिषेणनमयं[3] शक्रो भुवः सा ध्रुवं दिग्दा-हैरिव भस्मभिर्मघवता सृष्टैर्धृतोद्धूलना[4] । शंभोर्मा बत सांध्यवेलनटनं भाजि व्रतं द्रागिति क्षौणी नृत्यति मूर्तिरष्टवपुषोऽसृग्वृष्टिसंध्याधिया ॥ २६४ ॥ प्रागेतद्वपुरामुखेन्दु सृजतः स्त्रष्टुः समग्रास्त्विषां कोशः शोषमगादगाधजगतीशिल्पेऽप्यनल्पायितः । निःशेषद्युतिमण्ड-लव्ययवशादीषल्लभैरेष[5] वा शेषः केशमयः किमन्धतमसस्तोमैस्ततो निर्मितः ॥ २६५ ॥ अस्यारिप्रकरः शरश्च नृपतेः संख्ये पतन्तावुभौ[6] सीत्कारं च न संमुखौ रचयतः[7] कम्पं[8] च न प्राप्नुतः । तद्युक्तं न पुनर्निवृत्तिरुभयोर्जागर्ति[9] यन्मुक्तयोरेकस्तत्र भिनत्ति मित्त्रमपरश्चा-मित्रमित्यद्भुतम्[10][11] ॥ २६६ ॥ एतस्योन्नतसर्वकर्मकृतिनस्त्रैलोक्यचूडामणेः शंभुब्रह्मपुरंदरप्र-भृतयः स्तुत्यै न शक्ता यदि । देवः पन्नगनायको भगवती वाणी स्वयं चेज्जडा सौन्दर्यस्य निरूपणे वद कथं शक्तो भवेन्मानवः ॥ २६७ ॥ अर्धं दानववैरिणा[12] गिरिजयाप्यर्धं हर-स्याहृतं देवेत्थं भुवनत्रये स्मरहराभावे समुन्मीलति[13] । गङ्गा सागरमम्बरं शशिकला शे-षश्च पृथ्वीतलं सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मां च भिक्षाटनम् ॥ २६८ ॥ अन्यास्ता गु-[14] णरत्नरोहणभुवो धन्या मृदन्यैव सा संभाराः खलु तेऽन्य एव विधिना यैरेव सृष्टो युवा । श्रीमत्कान्तिजुषां द्विषां करतलात्स्त्रीणां नितम्बस्थलाद्दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥२६९॥ यैर्दृष्टोऽसि तदा ललाटपतितप्रासप्रहारो युधि स्फीतासृक्स्रुतिपाटली-कृतपुरोभागः परान्दारयन् । तेषां दुःसहकामदेहदहनप्रोद्भूतनेत्राञ्चलज्वालालीभरभासुरे पुररिपावस्तं गतं कौतुकम् ॥ २७० ॥ येऽणुत्वं मनसि स्वके विवृणुते रीत्या कयापि स्फुटं काणादाचरणस्य तत्समुचितं मन्ये प्रतिक्ष्माभृताम् । न्यायाभिज्ञतमोऽपि यत्प्रथयसे चित्ते महत्त्वं निजे मीमांसामत पक्षपातत इदं मन्ये त्वयाङ्गीकृतम् ॥ २७१ ॥ ये लब्धाश्रयमा-यतः फलभृतं कुर्वन्ति किंचिद्गुणं वार्धौ वारिमुचो न कस्य विदितास्ते कर्ममीमांसकाः । आलोच्यैव निराश्रयान्फलभरैः संबन्धतः सद्गुणाञ्श्रीमद्राम तवाद्भुतं पुनरिदं मीमांसकत्वं स्तुमः ॥ २७२ ॥ शंभौ यद्गुणवल्लरीमुपनयत्याकृष्य कर्णान्तिकं भ्रश्यन्ति त्रिपुरावरोधसु-दृशां कर्णोत्पलग्रन्थयः । स्वं चास्फालयति प्रकोष्ठकमिमामुन्मुच्य तासामहो भिद्यन्ते वलयानि दाशरथिना तद्भग्नमैशं धनुः ॥ २७३ ॥ त्रैलोक्याभयलग्नकेन भवता वीरेण विस्मारितः सञ्जीभूतमुहूर्तमण्डलधनुःपाण्डित्यमाखण्डलः । किं चाजस्रमखार्पितेन ह-विषा तं फुल्लमांसोल्लसत्सर्वाङ्गीणवलीविलुप्तनयनव्यूहः कथं वर्तते ॥ २७४ ॥ कल्पक्षो-

---

१ दलयित्वा. २ अमोघबाण इत्यर्थः. ३ सेनयाभियानम्. ४ धृतभस्मानुलेपना. ५ सुलभैः. ६ युगपत्. ७ दुःखाभावात्; (पक्षे) निर्गत्यभावात्. ८ भयाभावात्; (पक्षे) दुष्प्रयोगाभावात्. ९ अगमादिति भावः; (पक्षे) प्रत्यक्षादिति भावः. १० संसारादित्यर्थः; (पक्षे) चापादित्यर्थः. ११ सूर्यम्; (पक्षे) यथा-श्रुतम्. १२ हरिणा. हरिहरात्मकस्यैकस्य विग्रहस्य प्रसिद्धेः. १३ प्रकाशमाने. १४ पर्वतविशेषः.

णिरुहोऽयमित्यनुदिनं भूमीसुरैर्भाव्यसे कामोऽसाविति कामिनीभिरभितश्चित्ते चिरं चिन्त्यसे। श्रीनारायणमेव केवलमिति प्रेम्णा श्रिया ध्यायसे त्वं कालोऽयमिति प्रतिक्षितिधरैरेकोऽप्यनेकात्मभृत् ॥ २७५ ॥ नीतिस्त्रीमुकुरो जयध्वजनवस्तम्भः प्रतापांशुमत्पूर्वाद्रिः परिपन्थिभूपतिमहासंपन्मृगीवागुरः। उद्यत्पुण्यलतालवालमतनून्मत्तद्विपालो न कं यः श्रीकेलिनिकेतनं गुणमणिश्रेणी नवीनाकरः ॥ २७६ ॥ रत्नान्यम्बुधितोयगर्भमगमन्मेरुः सुराञ्शिश्रिये स्वीयाङ्के कमलां निधाय विदधे निद्रां हरिर्नीरधौ। यस्मिन्दित्सति भूरि दातरि नृणां भालस्थले दुर्लिपिं व्रीडानम्रशिराः कमण्डलुमयं जग्राह मार्ष्टुं विधिः ॥२७७॥ गाम्भीर्यं भवतो यशोत्रसुखमा त्वत्तेजसां संचयो दानं भूर्यदि वृष्टिरेव सकलेन क्षान्तिरेकत्र वै। आस्ते सागरसागरे शशिधरे सूर्योत्करे वारिदे मेदिन्यां प्रतिभासते निजगुणे भूमीयते संप्रति ॥ २७८ ॥ लक्ष्मीश्चेन्न सरस्वती तदुभयं यद्यस्ति नोदारता सा चैतत्त्रितयं भवेच्च कुहचित्पुण्यैरगण्यैरपि। सौजन्यं न विजृम्भते तदपि चेन्नास्तेऽवक्रप्रा मतिस्तत्सर्वं परमेश्वरस्य कृपया त्वय्येव संभाव्यते ॥ २७९ ॥ शत्रूणां यमदण्डतां मृगदृशां कंदर्पकोदण्डतां गीर्वाणद्रुमभावमर्थिविदुषां मध्ये त्रयाणामिति। आश्चर्यं मनुजेन्द्ररत्न भवतो यद्बाहुदण्डद्वयं नानात्वं गतमेकमेव जगतां मध्ये त्रयाणामिति ॥ २८० ॥ रक्तेनैव विलोचनेन करुणारत्नं करेण त्वया दृश्यन्ते नरदेवरत्न सुहृदां विद्वेषिणो नो नृपाः। किं सिक्ताः प्रथमं सुधाभिरभवन्दावानलैः किं परैः पूर्वं पल्लविताः कुतः किमपरे भस्मत्वमासादितम् ॥ २८१ ॥ या लक्षावलयानि बाहुयुगले कण्ठे च काचस्रजं मन्यन्ते बहुभूषणानि वनिता दीनद्विजानां पुरा। ता माणिक्यचितापि हेमवलयान्युज्झन्ति मुक्तास्रजं यद्गाराद्बहुदानशीलनृपते तत्त्यागलीलायितम् ॥ २८२ ॥ मेरुर्दूरगतो हिमालयगिरिः प्रालेयरूपोऽभवच्चन्द्रः श्रीसहजोऽपि यावकभयात्क्षीणत्वमुन्मीलति। कौपीनं कृतवान्हरोऽपि भगवान्विष्णुर्जलं सेवते वारां राशिरपेयतामुपगतः को नाम दातुं क्षमः ॥ २८३ ॥ भो भो देव प्रतापतो रिपुगणान्निर्जित्य राज्यं कुरु दीनानाथ जनोपकारकरणे स्वस्थान्वितस्त्वं भव। चण्डीविष्णुरवीश्वरस्य चरणे भक्तिः सदा वर्धतां पायात्सा परमेश्वरी प्रतिदिनं कल्याणमुक्तिप्रदा ॥ २८४ ॥ दंष्ट्रासंकटवक्त्रकन्दरगलज्जिह्वास्य हस्ताशना ज्वालाभासुरिभूरिकेशरशयस्तारस्य दैत्यैः सह। उद्गायन्ति यशांसि यस्य वितनैर्नादैः प्रचण्डानिलप्रक्षुभ्यत्करिकुम्भकूटकुहरव्यक्तैरणक्षोणयः ॥ २८५ ॥ कल्याणं भवतां यशः प्रसरतां धर्मः सदा वर्धतां संपत्तिः प्रथतां प्रजा प्रणमतां शत्रुक्षयो जायताम्। वाक्यं संवदतां वपुः प्रभवतां लक्ष्मीपतिः प्रीयतामायुस्ते शरदां शतं विजयतां दानाय दीर्घायुषे ॥ २८६ ॥ दृष्ट्यैवाङ्कुशमुद्रया निगडितो दारिद्र्यदन्तावलो वाचा सुन्दरयार्चया मम कुतो गङ्गावगाहोत्सवः। अभ्युत्थाननमस्क्रियार्घघटनैर्मानोऽपि दानोत्तरो लीलेयं भवता वयं तु विदुषां

मूर्धानमध्यासिताः ॥ १८७ ॥ पद्मा सद्मानि केशवस्य गहने रत्नानि रत्नाकरे हेमाद्रिर्हिमसानुना व्यवहितः स्वर्गे सुराणां तरुः । जम्बुद्वीपधरासु भूमिपतयो जाम्बूनदैर्दुर्मदास्त्वं तावत्सकलाप्तयेऽसि सुलभो भाग्यैर्द्विजानामिह ॥ १८८ ॥ राजन्नभ्युदयोऽस्तु जीव शरदां सार्यं शतं तेऽरयो रोगैर्यान्तु लयं यशः शशधरः काष्ठासु देदीप्यताम् । शिष्टान्पाहि बुधाश्रय प्रणतिभिर्देह्यर्थिनां स्वं सदा वाणी ते वदने रमा प्रतिदिनं गेहे भुजे स्ताज्जयः ॥ १८९ ॥ प्रभ्रश्यच्छ्रुतिमस्तकः प्रविगलत्सद्वर्ण विप्रस्थितिर्नश्यत्स्वाङ्गबलः प्रनष्टवचनप्राग्भावपूर्णस्मृतिः । वृद्धोऽत्यन्तमयं स्वयं कलिमहाम्लेच्छेन निर्मूलितो धर्मः संप्रति चाल्यते तव करालम्बेन भूमीपते ॥ १९० ॥ बन्दीकृत्य नृप द्विषां मृगदृशस्ताः पश्यतां प्रेयसां श्लिष्यन्ति प्रणयन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः । अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयते ॥ १९१ ॥ हित्वा त्वामुपरोधशून्यमनसां मन्ये न मौलिः परो लज्जामज्जनमन्तरेण न रमामन्यत्र संदृश्यते । यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रितायाः श्रियः प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ॥ १९२ ॥ धर्मं पालय नन्दय द्विजगणान्रामं समाराधय प्रत्यर्थिक्षितिपालभूरुहवनं निर्मूलमुन्मूलय । कान्ताचित्तसरोजसौभगवने भृङ्गत्वमासादय स्फीतां कीर्तिमशेषलोकजयिनीमाकल्पमाकल्पय ॥ १९३ ॥ चिन्तागम्भीरकूपादनवरतचलद्भूरिशोकारघट्टव्याकृष्टं निश्वसन्त्यः पृथुनयनघटीयन्त्रनिर्मुक्तधारम् । नासावंशप्रणालीविषमपथपतद्बाष्पपानीयमेता देव त्वद्वैरिनार्यः कुचकलशयुगेनान्वहं संवहन्ति ॥ १९४ ॥ त्वत्प्रारब्धप्रचण्डप्रधनीनधनितारातिवीरातिरेकक्रीडत्कीलालकुल्यावलिभिरलभत स्पन्दमाकन्दमुर्वी । दम्भोलिस्तम्भभास्वद्भुज भुजगजगद्भर्तुराभर्तुरेनां तेनायं मूर्ध्नि रत्नद्युतिततिमिषतः शोभते शोणभावः ॥ १९५ ॥ आसीदासीमभूमीवलयमलयजालेपनेपथ्यकीर्तिः सप्ताकूपारपारीसदनजनघनोद्गीतचापप्रतापः । वीरादस्मात्परः कः पदयुगयुगपत्पातिभूपातिभूयश्चूडारत्नोडुपत्नीकरपरिचरणामन्दनन्दन्नखेन्दुः ॥ १९६ ॥ एतेनोत्कृत्तकण्ठप्रतिसुभटनटारब्धनाट्याद्भुतानां कष्टं द्रष्टैव नाभूद्भुवि समरसमालोकिलोकास्पदेऽपि । अश्वैरस्वैरवेगैः कृतखुरखुरलीमङ्क्षुसंक्षुभ्यमानक्ष्मापृष्ठोत्तिष्ठदन्धंकरणरणधुरारेणुधारान्धकारात् ॥ १९७ ॥ मन्दोद्भूतैः शिरोभिर्मणिभरगुरुभिः प्रौढरोमाञ्चदण्डस्फायन्निर्मोकसंधिप्रसरदविगलत्संमदस्वेदपूराः । जिह्वायुग्माभिपूर्णाननविषमसमुद्गीर्णवर्णाभिरामं वेलाशैलाङ्कभाजो भुजगयुवतयस्त्वद्गुणानुद्गृणन्ति ॥ १९८ ॥ आ शैलेन्द्राच्छिलान्तःस्खलितसुरधुनीशीकरासा-

१ जलमार्गः. २ संग्रामः. ३ विनाशं प्राप्ताः. ४ रुधिरनदी. ५ श्रेणयः. ६ क्षरणम्. ७ वज्रम्. ८ शेषस्य. ९ रक्तता. १० समुद्रपरतीराणाम्. ११ निरन्तरम्. १२ अंशवः; (पक्षे) हस्ताः. १३ छिन्नकण्ठैः. १४ नर्तकः. १५ युद्धप्रेक्षकजनालयेऽपि. १६ अमन्दवेगैः. १७ खुरसंचारैः. १८ सपदि. १९ संचूर्ण्यमानात्.

रशीतादा तीरान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य। आगत्यागत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्तां चूडारत्नांशुगर्भास्तव चरणयुगस्याङ्गुलीरन्ध्रभागाः ॥ २९९ ॥ श्रावंश्रावं त्वदीयं गुणगणमखिलं सर्वदा याचकेभ्यस्त्वत्प्राप्यामीप्सितेभ्यः सकलविषयजं भूपवर्गं विहाय। त्वत्तोऽहं प्राप्तुमिच्छुर्विबुधतिलकतां त्वत्समीपेऽतिदूरादायातस्त्वं शतायुर्भव कुरु च तथा येन नान्यं भजेऽहम् ॥ ३०० ॥ विद्यावन्तो विनीताः प्रसभमभिसभं वाक्प्रपञ्चेषु जीवाः कैवानैवारभन्ते त्रिजगति विततां कीर्तिवल्लीमतल्लीम्। तेषामाधारभावं भुवनपरभृतो बिभ्रतो ये लसन्ते ते तु त्रैलोक्यतुङ्गा विमलफलजुषः स्वःपतिं स्वल्पयन्ति ॥ ३०१ ॥ वक्त्राम्भोजे सरस्वत्यधिवसति सदा शोण एवाधरस्ते बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः। वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं स्वच्छेऽन्तर्मानसेऽस्मिन्कथमवनिपते तेऽम्बुपानाभिलाषः ॥ ३०२ ॥ केचिद्बद्धाः सहेलं निजभवनगता मोचिताः केऽपि केचिद्देहाद्देहान्तराणि क्षणमपि गमिताः केऽपि नीता निबन्धम्। हत्वा हत्वा च केचित्प्रतिपदमुदयं प्रापिता व्यर्थभावं क्षोणीनाथस्य तस्योन्नतभुजपरिघेनारयः सारयश्च ॥३०३॥ उच्चैः कल्याणवाही करजितवसुधः सर्वदा पूर्णकामो विख्यातः कर्णवृत्त्या न च वचसि कटुश्चित्रपाकानुभावी। कोशापेक्षी परस्मादुचितबहुकथस्तत्परः पुण्यलोके चित्रं राजाधिराज त्वमिव तव रिपुस्तत्र कम्पं प्रतीमः ॥ ३०४ ॥ उत्पत्त्युत्पन्नशिष्टा विविधगुणगणा यत्र यान्ति प्रतिष्ठां बाधेन प्राक्तनानां न च नियमविधिर्नापि संख्यार्थदाने। ऊहः सर्वत्र यस्य स्फुरति च सकलः सत्य एवार्थवादो मीमांसाभावमञ्चत्यभिनवमधुना मूर्तिरेषा त्वदीया ॥ ३०५ ॥ हेलाप्रस्थानवेलाहतपृथुपटनादुन्दुभिध्वानधाराधारावाहिप्रसङ्गादसमनृपसकृत्संभ्रमभ्रान्तचित्ताः। दैवादाकुञ्चिताङ्गं विगलितनयनस्पन्दमिन्दीवराक्ष्यो लीयन्ते त्वद्रिपूणां निजगृहवलभीचारुचित्राङ्गनासु ॥ ३०६ ॥ आश्रप्यामाजिचर्यां तव विबुधगणा द्रष्टुमागत्य दृष्ट्वा रुष्टं त्वां नष्टमेतज्जगदिति जगुपुः संभ्रमास्तत्र तत्र। वह्निस्ते कोपपुञ्जे तुरगखुरपुटे मातरिश्वा प्रकोपे क्रोडे भास्वान्यशोजौ विधुरसिलतिका प्रान्तकक्षे कृतान्तः ॥ ३०७ ॥ यावद्भा भास्करस्य प्रभवति गगने यावदाकाशगङ्गा यावद्भोगी नगाद्या गगनगगपतिर्गोपतिर्वा गणेशः। यावद्ब्रह्मा पिनाकी हरितनुकमला वेदसिद्धान्तवाणी तावत्पुत्रप्रपौत्रस्वजनपरिवृतो भुज्यतां राजलक्ष्मीः ॥३०८॥

---

## विशिष्टराजप्रशंसा।

**परशुरामः** ॥ आदर्शाय शशाङ्कमण्डलमिदं हाराय हेमाचलं दीपाय द्युमणिर्महीमिव

---

१ वाणी; (पक्षे) नदीविशेषः. २ आरक्तः; (पक्षे) नदविशेषः. ३ मुद्राभिः सहितः; (पक्षे) अब्धिः. ४ सेना; (पक्षे) नद्यः.

कथं नो भिक्षवे दत्तवान् । दित्सापल्लवितप्रमोदसलिलव्याकीर्णमन्त्राम्बुजो जानीमो भृगुनन्दनस्तदखिलं न प्रायशो दृष्टवान् ॥ १ ॥ गोत्राचारविचारपारगतया वृद्धानिरादिष्टया मात्रा वस्तुषु तेषु तेषु पुरतः प्रस्तारितेषु क्रमात् । अन्नप्राशनवासरे सरभसं वक्षोभरोत्सर्पिणा येनात्तं धनुरीक्षिताश्च सपदि क्षत्रावतंसा दिशः ॥ २ ॥ **दशरथः** ॥ चिरादक्ष्णोर्जाड्यं शमयति समस्तासुरवधूकचाकृष्टिक्रीडाप्रसभसुभगंभावुकभुजः । त्रिलोकी जङ्घालोज्ज्वलसहजतेजा मनुकुलप्रसूतिः सुत्राम्णो विजयसहकृत्वा दशरथः ॥ ३ ॥ यस्योद्यद्भुजदण्डचण्डिमवलत्कोदण्डलीलायितैर्निष्पीते दनुजेन्द्रचन्द्रवदनाभ्रूवल्लरीविभ्रमे । लक्ष्मीमस्त्रविपाटलक्षतमयीमालम्बते केवलं पौलोमीकरजाङ्कुरव्यतिकरादाखण्डलीयं वपुः ॥ ४ ॥ यस्येन्द्रारिजयश्रिया सह झटित्याकृष्य मौर्वीलतां साकं भ्रूवलयेन चापवलयं दोर्मण्डले बिभ्राति । पौलोमीकुचकुम्भसीमनि रहः पश्यन्नखाङ्कं नवं धत्ते चेतसि केवलं न तु करे कोदण्डमाखण्डलः ॥ ५ ॥ **जनकः** ॥ ज्याघातः कार्मुकस्य श्रयति करतलं कण्ठमोंकारनादस्तेजो भाति प्रतापाभिधमवनितले ज्योतिरात्मीयमन्तः । राज्यं सिंहासनश्रीः शममपि परमं वक्ति पद्मासनश्रीर्येषां ते यूयमेते निमिकुलकुमुदानन्दचन्द्रा नरेन्द्राः ॥ ६ ॥ **रामचन्द्रः** ॥ एकादशरुद्राणामेका गौरीत्यनौचितीं मत्वा । राघव नृप तव यशसा दशापि गौरीकृता हरितः ॥ ७ ॥ त्वद्वैरिभवनलिखितां सीतामाहर्तुमुद्धृत्य । कपिकौणपमण्डलयोः शिवाशिव भूयो भवन्ति संरम्भाः ॥ ८ ॥ शरासने सायकमादधाने श्रीरामभद्रक्षितिपालमौलौ । सुराङ्गनानां वरलालसानां वामानि नेत्राणि परिस्फुरन्ति ॥ ९ ॥ गायन्तु किंनरगणाः सह किंनरीभिः श्रीरामचन्द्र शिखरेषु हिमाचलस्य । शेपेन्दुकुन्ददलबालमृणालनालनीहारहारहरहाससितं यशस्ते ॥ १० ॥ नालीकभङ्गकृदतीव नदीनबन्धुर्नक्षत्रपो नवसुधाविभवैकहेतुः । राजा किमिन्दुरपि नार्यभिमानहारी राजा परं जयति राघवसार्वभौमः ॥ ११ ॥ नृपतिमुकुटरत्न त्वत्प्रयाणप्रशस्ति प्लवगपदनमद्भूनिर्भराक्रान्तभोगैः । लिखति दशनटङ्कैरुन्नमद्भिर्नमद्भिर्जरठकमठभर्तुः कर्परे सर्पराजः ॥ १२ ॥ रघुतिलक नृपाल त्वद्विपक्षोणिपालप्रतिलसदपकीर्तिश्यामले विश्वभाले । भगवति भजमाने कृष्णतां शूलपाणौ किमुदधिगिरिपुत्र्यौ चक्रतुस्तन्न विद्मः ॥ १३ ॥ अधाक्षीन्नो लङ्कामयमयमुदन्वन्तमतरद्विशल्यं सौमित्रेरयमुपनिनायौषधिवनम् । इति स्मारंस्मारं त्वदरिनगरीभित्तिलिखितं हनूमन्तं दन्तैर्दशति कुपितो राक्षसगणः ॥ १४ ॥ यदि क्षुण्णं पूर्वैरिति जहति रामस्य चरितं गुणैरेतावद्भिर्जगति पुनरन्यो जयति कः । स्वमात्मानं तत्तद्गुणगरिमगम्भीरमधुरस्फुर-

---

१ इन्द्रस. २ अलीकभङ्गकृत्; (पक्षे) कमलविकासकृत्. ३ अनाथबन्धुः; (पक्षे) नदीनः समुद्रस्तद्बन्धुः. ४ क्षत्रियश्रेष्ठः; (पक्षे) नक्षत्रनायकः. ५ वसुधैश्वर्यस्य कारणम्; (पक्षे) नवीनायाः सुधाया यो विभवस्तस्य मुख्यकारणम्. ६ शत्रुमानहारी; (पक्षे) नारीणां मानहारकः. ७ शरीरम्. ८ कपाले. ९ शेषराजः.

द्राग्ब्रह्माणः कथमुपकरिष्यन्ति कवयः ॥ १५ ॥ झगिति जगतीमागच्छन्त्याः पितामह-विष्टपान्महति पथि यो देव्या वाचः श्रवः समजायत । अथ कथमसौ मुञ्चेदेनं न चेदव-गाहते रघुपतिगुणग्रामश्लाघासुधामयदीर्घिकाम् ॥ १६ ॥ लज्जा कीर्तिर्जनकतनया शैवको-दण्डभङ्गे तिस्रः कन्या निरुपमतया भेजिरे रामचन्द्रम् । अन्त्यापाणिग्रहणसमये ज्या-यसी जातकोपा भूपैः सार्धं खलु गतवती मध्यमाथो दिगन्तान् ॥ १७ ॥ गेहे गेहे सुभग भवतो रामभद्र क्षितीश त्वामालिख्य स्वमपि सविधे सस्पृहं भावयन्त्यः । तस्मिन्नाक-स्मिकमुपगते वल्लभे प्रीतिभाजः पौष्पं चापं तव करतले वेपमाना लिखन्ति ॥ १८ ॥ अहो रघुशिरोमणेरभिनरप्रतापावलिप्रचण्डकिरणप्रथप्रसरसाध्वसादाश्रयम् । सुराधिपति-रम्बुदान्कमलमिन्दिरा सेवते हिमांशुरपि चन्द्रमाः संततमम्बुधौ मज्जति ॥ १९ ॥ कीर्तिः श्रीरघुवंशरत्न भवतः स्वर्वाहिनीगाहिनी दिक्पालानखिलान्परीत्य दधती पाण्योः प्रता-पानलम् । सप्ताम्भोनिधिमण्डलान्यधिगता त्वय्येकपत्नीव्रतख्यात्यै विष्णुपदं स्पृशत्य-नुदिनं शेषस्य शीर्षाण्यपि ॥ २० ॥ कीर्तौ व्याप्तिमवेत्य वैरिवनिताबाष्पोदधेः साध-नादुत्तुङ्गे पृथिवीभुजां परिवृढे शश्वद्विपक्षे स्थितम् । सर्वक्ष्मापतिमौलिमण्डनमणे श्रीरा-मचन्द्र प्रभो चित्रं पश्य तव प्रतापदहनं जानन्ति सत्तार्किकाः ॥ २१ ॥ श्री-राम त्वदनेकचित्रचरितप्रोद्दामकीर्तिश्रुतिप्रादुर्भावाद्धूतमूर्ध्नि सकलत्रैलोक्यलोकेऽपि यत् । अश्रोत्राः फणिनस्तदेतदुचितं नो चेदहिस्वामिना व्याधूते शिरसि क्व भूः क्व गिरयः क्वामी दिशामीश्वराः ॥ २२ ॥ भ्रान्त्वा भूवलयं दशास्यदमन त्वत्कीर्तिहंसी दिवं याता ब्रह्ममरालसंगमवशात्सा तत्र गर्भिण्यभूत् । पश्य स्वर्गतरंगिणीपरिसरे कुन्दावदातं तया मुक्तं भाति विशालमण्डकमिदं शीतद्युतेर्मण्डलम् ॥ २३ ॥ ज्ञाते तत्पुरुषे तु तत्पुरुषति त्वन्नाम्नि शैवाग्रणीरल्पः कोऽपि समाश्रयन्निह बहुव्रीहिं बहुव्रीहिभाक् । श्रीरामेश्वर कर्म धारय इति कुर्वन्कविर्भास्करस्तस्मादण्वपि कर्म धारयतु न द्वन्द्वे तु निर्द्वन्द्वति ॥ २४ ॥ अब्दै-र्वारिजिघृक्षयार्णवगतैः साकं व्रजन्ती मुहुः संसर्गाद्वडवानलस्य समभूदापन्नसत्त्वा तडित् । मन्ये राम तया क्रमेण जनितो युष्मत्प्रतापानलो येनारातिवधूविलोचनजलैः सिक्तोऽपि सं-वर्धते ॥ २५ ॥ ये मज्जन्ति निमज्जयन्ति च परांस्ते प्रस्तरा दुस्तरे वार्धौ वीर तरन्ति वानरभटान्संतारयन्तेऽपि च । नैते ग्रावगुणा न वारिधिगुणा नो वानराणां गुणाः श्रीमद्दा-शरथेः प्रतापमहिमा सोऽयं समुज्जृम्भते ॥ २६ ॥ कीर्तिः श्रीरघुवंशदीप भवतो दूती मुरारेः

---

१ स्वसतीत्वव्रतज्ञापनाय दिव्यकरणं युक्तमेव. अत्रायं भावः. या हि स्त्री दिव्यं कर्तुमिच्छति सा पूर्वं गङ्गां गाहते; अपरं देवताः प्रदक्षिणीकृत्य पाण्योरनलं दधती सप्तमण्डलान्यतिक्रामति; ततो विष्णुपदं स्पृशति; तथा सर्पं कर्षति. तद्वदियं त्वत्कीर्तिरपि जलाग्निराजपदविष्णुपदसर्पस्पर्शनाख्यानि पञ्चदिव्यानि स्वसतीत्वनिर्वा-हाय विधत्त इति. २ उत्कटा. ३ कम्पितः. ४ शेषशिरोवधूनने भूमेः पात एव स्यात्ततस्तेषां गिर्यादिवस्तूनां क्वावस्थानं भवेद्यतस्तेषां भूम्याश्रितत्वात्तस्याश्च शेषाश्रितत्वादित्यर्थः. ५ हंसः. ६ तीरे. ७ कुन्दवदुज्ज्वलम्.

प्रियां[1] यस्मात्तुभ्यमदात्तदादि[2] गिरिशोऽभूदर्धनारीश्वरः[3] । ब्रह्माभूच्चतुराननः[4] सुरपतिश्चक्षुःसहस्रं[5] दधौ स्कन्दो मन्दमतिश्चकार[6] न करस्पर्शं स्त्रियाः शङ्कितः[7] ॥ २७ ॥ एकं काञ्चनभूधरं[8] सुवलयं वासः सुधावारिधिं[9] तारं[10] तारकराजमण्डलमिदं[11] संप्राप्य सत्कुण्डलम् । दूरस्थापि[12] च तेन तेन सदृशं त्वां भूषणं चापरं स्त्रीमानग्रहिलेव[13] याचतितरां[14] श्रीराम कीर्तिस्तव ॥२८॥ संग्रामो दिवसायते[15] तव भुजः पूर्वाचलेन्द्रायते[16] त्वत्क्रोधोऽप्यरुणायते[17] तव लसच्छौर्यं प्रकाशायते[18] । त्वद्वैरी तिमिरायते[19] तदबलाहृत्सूर्यकान्तायते[20] त्वत्कीर्तिः कमलायते[21] रघुपते त्वत्खड्गचण्डद्युतेः[22] ॥ २९ ॥ अस्माकं परमन्दिरस्य[23] चरितं यद्यप्यवाच्यं भवेत्स्वामी त्वं कथयामि[24] तेन भवतः किंचित्प्रियादूषणम् । श्रीमद्राम नृप त्वया रणमुखे पाणिग्रहः सादरं यस्याः सासिलता परस्य हृदये दृष्टा लुठन्ती[25] मया ॥ ३० ॥ सत्यं सा बहुरूपिणी[26] समभवत्सिद्धिस्वरूपा[27] भवत्कीर्तिः[28] श्रीरघुवंशरत्न विमला जागर्ति विश्वोदरे । क्ष्मापारे रिपुमन्दिरे नृपपुरे रत्नाकरे निर्झरे कान्तारे गिरिशेखरे विषधरागारे तथैवाम्बरे ॥ ३१ ॥ गर्वावेशविशालरावणभुजप्रोद्यत्प्रतापानलज्वालाजालनवाम्बुदः[29][30][31] कथमसौ सीतापतिर्वर्ण्यते । यस्या-

---

१ लक्ष्मीम्. २ तदाप्रभृति. ३ महेश्वरेणेत्थं तर्कितम्, यद्यहमुमां स्वपार्श्वे न स्थापयिष्यामि तदेयं कीर्तिदूती लक्ष्मीमिवापहृत्य मम कामिनीं गौरीमपि रामाय प्रदास्यतीति भिया स्वाङ्ग एव गौरी स्थापिता तत्प्रभृत्यर्धनारीश्वरो हर इति ख्यातिः. ४ ब्रह्मणा स्वपत्नीरक्षणार्थं चतसृष्वपि दिक्षु मुखानि निर्मितानीति भावः. ५ यतो बहूनि चक्षूंषि मम चेद्भविष्यन्ति तदा स्वाप्सरसः प्रलोभ्यापहर्तुमागच्छन्तीं कीर्तिदूतीमवलोकयिष्यामीति भावः. ६ मन्दा विवाहेऽलसा मतिर्यस्य सः. ७ यतश्चेदहं कृच्छ्रेण प्राक्स्त्रियं परिणेष्यामि तथापि तदपहरणे मम तस्या वियोग एव भावी, ततः किमनेन परिणयनारम्भेणेति विचारादिति भावः. ८ ममैकः काञ्चनगिरिर्दक्षिणे करे कटकोऽस्ति वामे तु न किमपीत्येकनेत्राञ्जनवन्न शोभेते पाणी, अतोऽपरं तादृशं वलयाख्यं भूषणं मह्यं देहीति प्रार्थयते. ९ यतो न ह्येकं वास उपर्यधश्चाङ्गे परिधातुं शक्यते. १० उज्ज्वलम्. ११ इदमेकं तारकाणां राजा चन्द्रस्तस्य मण्डलं सत्कुण्डलमेकस्मिन्कर्णे संप्राप्य तत्सममपरकुण्डलं द्वितीयकर्णार्थे याचति. १२ दिक्पर्यन्तं प्राप्तापि. १३ स्त्रिया यो मानः स्वपतिसौभाग्यसुरूपत्वादिगर्वस्तेन ग्रहिला ग्रहगृहीता. १४ अन्यापि या मानिनी मानग्रहगृहीता भवेत्सा विदेशस्थापि पतिं प्रभविष्णुं तत्तद्वस्तु याचते यद्भूमण्डलेऽपि नाप्यते तथेयं कीर्तिरप्यपरं भूषणं याचत इत्यर्थः. १५ यथा दिवसे सूर्यः प्रभाप्रगल्भतामुपैति तथा त्वत्खड्गभानुरपि सङ्ग्रामे स्वस्पष्टतां प्रकटयतीत्यर्थः. १६ यथा भानुरुदयाचले भासते तथा चासौ त्वद्भुजे भासत इत्यर्थः. १७ यथारुणो रक्तवर्णोऽग्रे प्रादुर्भवति तथा क्रोधोऽपि रक्तमुखनेत्रादिना प्रादुर्भवतीत्यर्थः. १८ यथा सूर्यस्योदये सर्वत्र प्रकाशः प्रसरति तथा त्वत्खड्गभानोरुदये तव शौर्यं स्पष्टमुदेतीत्यर्थः. १९ यथा सूर्योदये तमांसि नाशमायान्ति तथा त्वत्खड्गभानूदये तव वैरिणो दिगन्तगामिनो भवन्तीत्यर्थः. २० यथा भानोरुदये सूर्यकान्तमणिषु महांस्तापः संजायते तथा चैतदुदये सति वैरिस्त्रीहृदयेषु महान्पश्चात्तापो भवतीत्यर्थः. २१ यथा भानोरुदये कमलानि विकस्वराणि भवन्ति तथा त्वत्खड्गभानोरुदये त्वत्कीर्तिर्विकासमुपैतीत्यर्थः. २२ तिग्मांशुत्वात्खड्गस्य सर्वथा सूर्योपमत्वमस्तीति शेषः. २३ परस्त्रियाः. २४ यतो भक्ताः स्वस्वामिनः कथमपि हानिं सोढुमक्षमाः. स्त्रीदुर्लक्षणं तु परमपमानकारणमतो ब्रवीमीत्यर्थः. २५ यथा काचित्पाणिगृहीती परपुरुषस्य हृदये विलासं कुर्यात्तदा तस्या असतीत्वलक्षणेन पुरुषस्य महद्दूषणं लग्नं भवेत्. २६ नानारूपत्वेन विश्वव्यापिन्यभूदिति भावः. २७ अणिमाद्यष्टसिद्धिमती. २८ यथा योगिनी सिद्धा गिरिदर्यादिषु स्वकामचारिणी भवेत्तथा त्वत्कीर्तिरपीति भावः. २९ देदीप्यमानाः. ३० समूहः. ३१ अन्योऽप्यनलोऽम्बुदेन शाम्यते यथा तथा तत्प्रतापाग्निरपि रामेण शामित इति भावः.

रातिनृपाः कृपाणजलधौ मग्नाः पुरो गौरवादत्युच्चैर्गतयो भवन्ति च पुनर्भित्त्वा रवेर्मण्डलम् ॥ ३२ ॥ भीमं यज्जलधिं जवेन हनुमानुल्लङ्घ्य लङ्कां गतो यच्चाशोकमहावनं दलितवानक्षं च यत्क्षुण्णवान्[3] । सीतोपायनमौलिरत्नसहितः प्राप्तश्च यस्त्वामसौ तत्राप्येष भवत्प्रतापमहिमा निर्यन्त्रणः[4] कारणम् ॥ ३३ ॥ धत्ते नायक राम तावकयशो रामे[5] शशाङ्के [6]मरुद्वाहे स्वर्गगजे[7] हरे फणिपतौ वाण्यां वृषे भे[8] रुचिम् । अन्येषां तु तदम्बरे[9] तदहिते[10] तद्व्यञ्जने तन्मदे तत्कण्ठे च तदीक्षणे तदलके तत्प्रोथके[11] तत्पथे[12] ॥ ३४ ॥ श्रीमन्नायक रामभद्र भवतः पाणौ कृपाणं रणे दृष्ट्वा यद्यदभूदरिक्षितिभुजां तत्तत्समाकर्णय । अङ्गे वेपथुरन्धता नयनयोर्वक्त्रे[13] तृणं भूयसी भीतिश्चेतसि वाचि संस्तुतिकथा हस्तद्वयं मस्तके[14] ॥ ३५ ॥ आकृष्टे कवचादहीन्द्ररसनाकल्पे[15] कृपाणे त्वया श्रीमन्नायक रामचन्द्र भवतः प्रत्यर्थिनां वेश्मसु । गेहन्ते[16] सहसा लुलायचमरी[17]शार्दूल[18]शाखाचरी[19]यक्षोरक्षशृगालकोल[20]शल्ल[21]भल्लूक[22]भिल्लादयः ॥ ३६ ॥ रेफ व्यञ्जनराजता[23] तव तवाकार प्रकर्षः स्वरेष्वन्त्यस्यापि मकार विस्फुरति ते वर्गाक्षरेष्वादिमा । यैः संभूय निगद्यते रघुकुलालंकारहीराङ्कुरो देवः क्षोणिसुतापयोधरतटीशृङ्गारहारो हरिः ॥ ३७ ॥ स्वेदाम्भःकणमण्डलानि खुरली[24]खेलोद्भवान्यन्वहं तद्बाह्वो रसयन्[26]महाबल इति ख्यातिं गतो मारुतः[27] । तं चास्वाद्य मुहुः सहस्रफणताशाली बलीयोर्नहिर्धत्ते कोमलकोमलैरपि फणैः श्रीरामचन्द्र स्थिरैराम्[29] ॥ ३८ ॥ श्रीरामे मृगयां गतेऽपि धनुषा बाणे समारोपितेऽप्याकर्णान्तगतेऽथ मुष्टिगलितेऽप्येणाङ्गिलग्नेऽपि च । न त्रस्तं न पलायितं न चकितं नोत्कम्पितं न द्रुतं मृग्या मद्वशगं करोति दयितं कामोऽयमित्याशया ॥ ३९ ॥ गाम्भीर्येण महोदयेन शरणत्राणेन मर्यादया सर्वाशापरिपूरणेन महता स्थैर्येण धैर्येण च । राम त्वामनुकर्तुमिच्छतितरां वारांनिधिः किं त्वसौ पीतो वानरलङ्घितः प्रमथितो बद्धः श्रिया त्याजितः ॥ ४० ॥ देव श्रीनृप रामचन्द्र भवतो दिग्जैत्रयात्रोत्सवे धावद्वीरतुरंगचञ्चलखुरक्षुण्णक्ष्मामण्डलात् । वातोद्धूतरजोमिलत्सुरनदीसंजातपङ्कस्थलीदूर्वाचुम्बनचञ्चवो हरिहयास्तेनैव[30] दीर्घं दिनैः ॥ ४१ ॥ साधर्म्येण

१ कृष्णाम्भस्त्वात्. २ स्वर्गयायिनो भवन्ति. अन्यो हि यो जलधौ निमग्नो भवति स च नीचैर्गतिरेव भवतीति प्रसिद्धम्. ३ मारितवान्. ४ अस्खलितः. ५ बलभद्रे. ६ उच्चैःश्रवसि. ७ ऐरावते. ८ नक्षत्रे. ९ रामवस्त्रे. तद्वस्त्रस्य नीलत्वादिति भावः. १० चन्द्रशत्रौ. राहावित्यर्थः. ११ वृषनासिकायाम्. १२ नक्षत्रपथे. आकाश इत्यर्थः. १३ येषां मुखे तृणं दृश्यते ते शूरा अपि गोवदवध्या इति भावः. १४ शिरसि करद्वयं त्वत्प्रणामार्थं कृतवन्त इत्यर्थः. १५ सदृशे. १६ तन्मन्दिराणां शून्यत्वेन वनचरतिरश्चां तत्र प्रवेशस्यानिवार्यत्वादिति भावः. १७ वनगावः. १८ व्याघ्राः. १९ वानर्यः. २० शूकराः. २१ शल्यकाः. २२ ऋक्षाः. २३ व्यञ्जनेषु श्रेष्ठत्वम्. २४ कखगादिषु. २५ श्रमः. २६ आस्वादयन्. २७ यदा त्वया वैरिणो हतास्तदा त्वद्भुजयोः परिश्रमजः स्वेद उत्पन्नस्तच्छोषणाद्वायुर्महाबलोऽभूदिति भावः. २८ शेषः. २९ पृथ्वीम्. ३० दूर्वाङ्कुरभक्षणे रता अरुणेन प्रेरिता अपि न तूर्णं प्रयान्ति किं तु शनैरेव. अत एव ग्रीष्मर्तौ महान्तो दिवसा जायन्त इति भावः.

कथं गृणन्तु यमुनावेणीं कृपाणीं च ते श्रीमद्राम चमूवरेण्य भवतो वाग्ब्रह्मसिद्धान्तिनः । नाकृष्टां हलिना न कालियवशात्क्रूरां न धाराजडां न च्छायाजनितां न वंक्रबहुलां न ग्रामभङ्गां क्वचित् ॥ ४२ ॥ आबाल्यं पतिरेष मे जगदिदं जानाति तत्त्वं पूनर्भूर्मध्ये समुपागता तदपि ते विख्यायते यः पतिः । वृद्धा नास्य गृहे वसामि सुचिरं तिष्ठन्स्थिरात्रेति तन्मात्सर्यादिव राम भूप भवतः कीर्तिर्दिगन्तं गता ॥ ४३ ॥ का शृङ्गारकथा कुतूहलकथा गीतादिकानां कथा माद्यद्दन्तिकथा तुरंगमकथा कोदण्डदीक्षाकथा । एकैवास्ति परं पलायनकथा त्वद्वैरिभूमीभुजां देव श्रीरघुनाथ नाथ जगति स्वप्नेऽपि नान्या कथा ॥ ४४ ॥ त्वं चेत्कल्पतरुर्वयं सुमनसस्त्वं चेत्सुधात्मा कलाः संपूर्णा वयमीश्वरो यदि भवान्स्वच्छा विभूतिर्वयम् । संपूर्णः कमलाकरो यदि भवाञ्श्रीराजहंसा वयं स्वामिंस्त्वं शृणु रामचन्द्र नृपते किं किं न तेऽङ्गं वयम् ॥ ४५ ॥ बालक्रीडनमिन्दुशेखरधनुर्भङ्गावधि प्रह्वता ताते काननसेवनावधि कृपा सुग्रीवसख्यावधि । आज्ञा वारिधिबन्धनावधि यशो लङ्केशनाशावधि श्रीरामस्य पुनातु लोकवशता जानक्युपेक्षावधि ॥ ४६ ॥ त्वत्कीर्तिर्धनिकाननं मधुरिमा तस्याधमर्णा सुधा शीतांशुः प्रतिभूस्तदर्थिनकृते सैषा दिवं धावति । सा लीना तव वाचि राम नृपते चन्द्रो निरस्तध्वनिः शङ्कातङ्कभृदंशुकावृततनुर्नक्तं समुत्सर्पति ॥ ४७ ॥ अस्त्रामास तृणं प्रियाद्रुहि तृणामास स्मरारेर्धनुर्दारामास मुनेः शिलापि नृवरामास स्वयं पादुका । कुल्यामास महार्णवोऽपि कपयो योधांबभूवुस्तदा पौलस्त्यो मशकांबभूव भगवंस्त्वं मानुषामासिथाः ॥ ४८ ॥ उप्ता कीर्तिलता गुणैस्तव विभो सिक्ता च दानोदकैर्मेरुस्तम्भमवाप्यदिक्षु वितता प्राप्ता नभोमण्डलम् । धूपैस्त्वत्प्रतिपक्षलक्षवनितानिःश्वासजैर्धूपिता ऋक्षैः कोरकितेन्दुना कुसुमिता श्रीरामचन्द्र प्रभो ॥ ४९ ॥ यद्बीजानि च मौक्तिकानि करिणां दन्ता यदीयाङ्कुरा यत्पत्राणि शरद्घना हिमगिरिर्यस्याः प्रकाण्डो महान् । यत्पुष्पाणि च तारका हिमरुचिर्यस्याः फलं सुन्दरं सेयं राजति रामकीर्तिलतिका ब्रह्माण्डभाण्डोदरे ॥ ५० ॥ नो ग्लानिं भजते दिने न च सुराधीशैः समीपीयते नो राहुर्ग्रसते न वा मृगदृशां वक्त्रैः पराजीयते । नो मेघैश्च पिधीयते न च कुहूकालेऽपि संक्षीयते श्रीरामक्षितिपाल भाति जगति त्वत्कीर्तिचन्द्रः सदा ॥ ५१ ॥ आकृष्टे युधि कार्मुके रघुपते वामोऽब्रवीद्दक्षिणं पुण्ये कर्मणि भोजने च भवतः प्रागल्भ्यमस्मिन्न किम् । वामान्यः पुनरब्रवीन्न मम भीः पृच्छाम्यहं स्वामिनं छिन्द्यां रावणवक्त्रपङ्क्तिमथवेत्येकैकमादिश्यताम् ॥ ५२ ॥ अम्भः कर्दमतामुपैति सहसा पङ्कः पुनः पांसुतां रेणुर्वारणकर्णतालयुगलैर्दिक्प्रा-

१ कथयन्तु. २ छाया सूर्यभार्या. ३ पानीयवाहाः. ४ पर्वतादिविषमस्थल इत्यर्थः. ५ यतोऽम्भसो द्रवत्वेऽपि भवदीयाश्वाद्युत्थापितरजःसंपर्कात्तस्य कर्दमता जातेति भावः.

न्तनीहा[1]रताम् । निम्नत्वं गिरे[2]यः समं विषमतां शून्यं ज[3]नाकीर्णतां निर्याते त्वयि रामचन्द्र नृपते त्यक्तस्वरूपं जगत् ॥ ५३ ॥ पाताले मं[4]ञ्जु मूलं फणिपतिरभितः कीर्तिवल्लेस्तवैषा स्थू[5]णा कैलासशैलो गगनमिह महामण्डपः पा[6]ण्डुदण्डाः । दन्तीन्द्रस्थूलदन्ता द[7]लततिरतुला शारदाभ्राणि सा[8]रास्ताराः पुष्पाणि चन्द्रः फलमिदममलं राम राजेन्द्र मन्ये ॥५४॥ कूर्मः पा[9]दोऽस्य य[10]ष्टिर्भुजगपतिरसौ भा[11]जनं भूतधात्री तै[12]लपूराः समुद्राः कनकगिरिरयं वृ[13]त्तवर्तिप्ररोहः । ज्योतिश्चण्डांशुरोचिर्गगनमलिनिमा कज्जलं दह्यमाना शत्रुश्रेणी पतङ्गा ज्वलति रघुपते त्वत्प्रतापप्रदीपः ॥ ५५ ॥ शक्तिः सर्वातिरिक्ता विलसति न च ते पीलुपाकप्रियत्वं वाक्यं धर्मे प्रमाणं स्वयमपि रचितं नान्य ईशोऽस्ति कश्चित् । नो वायं भेद आस्ते क्वचिदपि विषये नैव मिथ्या प्रवाहश्चित्रं पाण्डित्यमेतद्वहसि रघुपते गौतमादौरतकर्यम् ॥ ५६ ॥ पूर्वत्रासिद्धबुद्धिर्द्विगुणितकरणेऽप्यास्ति तेऽल्पप्रयत्नो यः कश्चिन्नैव लोपं भजति बहुतरापेक्षिणोऽप्यन्तरङ्गाः । नो वा बाधः परेण क्वचिदपि विषये नापवादो गुणानां वृद्धीनां वर्णमात्रं सदनामिति नवो राम साधुत्वमार्गः ॥ ५७ ॥ प्रौढिं ध[14]त्तां कलासु प्र[15]थयतु कुमुदं सत्पथे [16]संचरेद्वा नेत्रानन्दं विध[17]त्ताम[18]वतु च विबुधान[19]स्तु राजा तथापि । दोषा[20]न्वेषी क[21]लङ्की स[22]हजजडतनुः स[23]क्षयः प[24]क्षपाती न[25]क्षत्रेशः कथं वा तुलयतु तुलनां रामचन्द्रेण चन्द्रः ॥ ५८ ॥ माद्यद्वे[26]तण्डगण्डच्युतमदमदिरासंचरच्च[27]ञ्चरीकीसाङ्गारानन्दगीताः कविभवनभुवस्ताः पुरस्ताद्भवन्ति । पश्चादक्षन्ति येषामुपरि करुणया रामभूपालमौलेरुद्वेलदुग्धवीचीबहलधवलिमा बद्धकक्षाः कटाक्षाः ॥५९॥ बीजं चिन्तामणिश्चेत्कनकगिरितटीजन्मभूमिर्भवेच्चेत्सेक्त्री चेत्कामधेनुर्विधिकुलमखिलं मूलसंस्कारभृच्चेत् । वित्तेशो

---

१ दिगन्ते समुद्राणां सत्त्वात्तत्र च वारणकर्णतालयुगलप्रेरिता रेणवो निपतिता हिमा भवन्तीति भावः. २ घोटकखुरक्षुण्णाः सन्तः. ३ त्वत्सेवया वने प्रवेशादरण्यमपि जनपदवद्भवति. ४ मनोहरम्. ५ स्तम्भः. ६ श्वेतयष्टिका. ७ पर्णसंततिः. ८ प्रसृताः. ९ अवष्टम्भहेतुः. १० दीपदण्डः. ११ दीपाधारपात्रम्. १२ तैलपूर्णाः. १३ मध्यवर्तितत्वाद्वर्तुलदशाङ्कुरः. १४ (चन्द्रपक्षे) तथा कलास्वंशेषु प्रौढिं प्रागल्भ्यं धत्तां बिभर्तु; (रामपक्षे) यथा कलासु विज्ञानेषु प्रौढिं धत्ते. १५ (चन्द्रपक्षे) तथा कुमुदं प्रकाशं प्रथयतु विस्तारयतु; (रामपक्षे) यथा कौ पृथिव्यां मुदं हर्षं जनयति. १६ (चन्द्रपक्षे) तथा सतां देवानां पन्थाः सत्पथ आकाशस्तस्मिन्संचरेत्; (रामपक्षे) यथा सत्पथे सता योग्ये मार्गे संचरति. १७ (चन्द्रपक्षे) तथा नेत्राणां लोचनानामानन्दं विधत्तां कुरुताम्; (रामपक्षे) यथा नेतॄणां रक्षकाणामानन्दं जनयति. १८ (चन्द्रपक्षे) तथा विबुधान्देवानवतु रक्षतु; (रामपक्षे) यथा विबुधान्पण्डितानवति. १९ (चन्द्रपक्षे) तथा च राजा शोभितोऽस्तु; (रामपक्षे) यथा नाम्ना क्रियया गुणैश्च राजा. २० (चन्द्रपक्षे) दोषा रात्रिस्तामन्वेषते तच्छीलः; (रामपक्षे) न दोषमन्वेषते किंतु गुणान्. २१ (चन्द्रपक्षे) कलङ्कवान्; (रामपक्षे) कलङ्की न. २२ (चन्द्रपक्षे) सहजतो जलमयी तनुर्यस्य सः; (रामपक्षे) निसर्गतो मूर्च्छितस्वभावो न. २३ (चन्द्रपक्षे) कृष्णपक्ष एकैककलाक्षयात्सक्षयः; (रामपक्षे) न कदाचन तस्य क्षयः किंतु सर्वदा वृद्धिरेव. २४ (चन्द्रपक्षे) पक्षेऽतीतेऽमायां पतनशीलः; (रामपक्षे) पक्षपाती न. २५ (चन्द्रपक्षे) नक्षत्राणां तारकाणामीशः स्वामी; (रामपक्षे) न च न क्षत्रेशः किंतु सर्वेषां क्षत्राणामीशः. २६ हस्ती. २७ भ्रमरी.

रक्षिता चेत्सरसिजनिलया मञ्जरी चेत्तदा स्याद्राम क्ष्मापालमौले तव भुजलतया कल्पवृक्षः सदृक्षः ॥६०॥ मन्ये मृत्योः सपत्नी जगति सुविदिता कालकूटस्य कन्या धात्री कर्कोटकस्य स्मरणभयकरी किं च वज्रस्य माता। कल्पान्ताग्नेः पुरंध्री प्रभवति भगिनी भीषणा कालरात्रेर्वृतीयं ते कृपाणी सुरपुरसुदृशां रामचन्द्र क्षितीश ॥ ६१ ॥ **कृष्णः** ॥ श्रीकृष्ण त्वत्प्रतापेन प्रतप्ताङ्गीर्दिगङ्गनाः। दिग्गजा वीजयन्त्येव कर्णतालैः पुनःपुनः ॥६२॥ मन्येऽरण्ये कुलगिरिगुहागह्वरे पर्यटन्ती विद्धा दर्भैः किमपि चरणे वासुदेवस्य कीर्तिः। इन्दौ कुन्दे कुमुदमुकुले चामरे चन्दने वा दत्त्वा दत्त्वा मृदुनि पुरतः पादमेषा प्रयाति ॥६३॥ क्षीरक्षालितपाञ्चजन्यकिरणश्रीगर्वसर्वंकषाः श्रीकृष्णार्जुनसारथेऽसुररिपो त्वत्कीर्तिविस्फूर्तयः। कैलासन्ति हिमाचलन्ति विकसत्कुन्दन्ति कन्दन्ति च क्षीरोदन्ति हलायुधन्ति विबुधाहारन्ति हीरन्ति च ॥६४॥ त्वद्वाहोद्धूतधूल्यः करिकरनिकरैः सीकराश्च प्रयुक्ता व्योम व्यापुः समन्ताद्यदुमुकुटमणे तत्र पङ्कोद्गतोऽभूत्। आगच्छाद्भिः सुरैः क्ष्मां तव भजनकृते स्फाटिकीभिः शिलाभिर्बद्धः पन्थास्तदानीं सुरसरिदिति तं मानवा मानयन्ति ॥६५॥ **विक्रमार्कः** ॥ तत्कृतं यन्न केनापि तद्दत्तं यन्न केनचित्। तत्साधितमसाध्यं यद्विक्रमार्केण भूभुजा ॥६६॥ सारसवत्ता विहता नवका विलसन्ति चरति नो कङ्कः। सरसीव कीर्तिशेषं गतवति भुवि विक्रमादित्ये ॥६७॥ हस्ती वन्यः स्फटिकघटिते भित्तिभागे स्वबिम्बं दृष्ट्वा दृष्ट्वा प्रतिगज इति त्वद्विषां मन्दिरेषु। दन्ताघाताद्गलितदशनस्तं पुनर्वीक्ष्य सद्यो मन्दं मन्दं स्पृशति करिणीशङ्कया विक्रमार्क ॥६८॥ कीर्तिस्ते दयिता तदीयजठरे लोकत्रयं वर्तते तस्मात्त्वं जगतः पिता पितृधनं येनार्थिनां त्वद्धनम्। वीर श्रीवर विक्रमार्क भवतस्त्यागं न मन्यामहे कस्त्यागः स्वकुटुम्बपोषणविधावर्थव्ययं कुर्वतः ॥ ६९ ॥ **मुञ्जः** ॥ लक्ष्मीर्यास्यति गोविन्दे वीरश्रीर्वीरमेष्यति। गते मुञ्जे यशःपुञ्जे निरालम्बा सरस्वती ॥ ७० ॥ **भोजः** ॥ त्वच्चित्ते भोज निर्यातं द्वयं तृणकणायते। क्रोधे विरोधिनां सैन्यं प्रसादे कनकोच्चयः ॥ ७१ ॥ भोज त्वद्दानपाथोधौ दरिद्रस्य निमज्जतः। न कोऽपि हि भुजालम्बं दत्ते मेऽभयदायकम् ॥ ७२ ॥ निजानपि गजान्भोजं ददानं प्रेक्ष्य पार्वती। गजेन्द्रवदनं पुत्रं रक्षत्यथ पुनः पुनः ॥ ७३॥ प्रतापभीत्या भोजस्य तपनो मित्रतामगात्। और्वो वाडवतां धत्ते तडित्क्षणिकतां श्रिता ॥ ७४ ॥ भोज त्वत्कीर्तिकान्ताया नभोभालस्थितं महत्। कस्तूरीतिलकं राजन्गुणागारं विराजते ॥ ७५ ॥ अस्य श्रीभोजराजस्य द्वयमेव सुदुर्लभम्। शत्रूणां शृङ्खलैर्लोहं ताम्रं शासनपत्रकैः ॥ ७६ ॥ धारेश त्वत्प्रतापेन पराभूतस्त्विषां पतिः। सुवर्णपात्रव्याजेन देव त्वामेव सेवते ॥ ७७ ॥ त्वद्यशोजलधौ भोज निमज्जनभयादिव। सूर्येन्दुबिम्बमिषतो धत्ते कुम्भद्वयं नभः ॥ ७८ ॥ शुक्तिद्वयपुटे भोज यशोब्धौ तव रोदसी। मन्ये तदुद्भवं मुक्ताफलं शीतांशुमण्डलम् ॥ ७९ ॥ अद्य धारा सदाधारा सदालम्बा सरस्वती। पण्डिता

१ सूर्यः.

मण्डिताः सर्वे भोजराजे भुवं गते ॥ ८० ॥ सुरताय नमस्तस्मै जगदानन्दहेतवे । आनुषङ्गि फलं यस्य भोजराज भवादृशाः ॥ ८१ ॥ श्रीभोज साम्यं तव कल्पवृक्षः सदा वदान्योऽपि कथं प्रयाति । यतो भवद्दानसुपुष्टविप्रहव्येन कुक्षिंभरिरस्य भर्ता ॥ ८२ ॥ भोजप्रतापं तु विधाय धात्रा शेषैर्निरस्तैः परमाणुभिः किम् । हरेः करेऽभूत्पविरम्बरे च भानुः पयोधेरुदरे कृशानुः ॥ ८३ ॥ भोजप्रतापाग्निरपूर्व एष जागर्ति भूभृत्कटकस्थलीषु । यस्मिन्प्रविष्टे रिपुपार्थिवानां तृणानि रोहन्ति गृहाङ्गणेषु ॥ ८४ ॥ यथा यथा भोजयशो विवर्धते सितां त्रिलोकीमिव कर्तुमुद्यतम् । तथा तथा मे हृदयं विदूयते प्रियालकालीधवलत्वशङ्कया ॥ ८५ ॥ पन्थाः संहर दीर्घतां त्यज निजं तेजः कठोरं रवे श्रीमान्विन्ध्यगिरे प्रसीद सदयं सद्यः समीपे भव । इत्थं दूरपलायनश्रमवतीं दृष्ट्वा निजप्रेयसीं श्रीमद्भोज तव द्विषः प्रतिदिनं जल्पन्ति मूर्च्छन्ति च ॥ ८६ ॥ धाराधीश धरामहेन्द्र[1]गणनाकौतूहली[2] यामयं वेधास्त्वद्गणने चकार खटिकाखण्डेन[3] रेखां दिवि । सैवेयं त्रिदशापगा समभवत्त्वत्तुल्यभूमीधराभावात्तु त्यजति स्म सोऽयमवनीपृष्ठे तुषाराचलः ॥ ८७ ॥ राजन्मुञ्जकुलप्रदीप सकलक्ष्मापालचूडामणे युक्तं संचरणं तवाद्भुतमणिच्छत्रेण रात्रावपि । मा भूत्त्वद्वदनावलोकनवशाद्व्रीडाभिनम्रः शशी मा भूच्चेयमरुन्धती भगवती दुःशीलताभाजनम् ॥ ८८ ॥ छन्नं सैन्यरजोभरेण भवतः श्रीभोजदेव क्षमारक्षादक्षिणदक्षिणक्षितिपतिः प्रेक्ष्यान्तरिक्षं क्षणात् । निःशङ्को निरपत्रपो निरनुगो निर्बान्धवो निःसुहृन्निःस्त्रीको निरपत्यको निरनुजो निर्हाटको निर्गतः ॥ ८९ ॥ मुक्ताः [4]केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः[5] प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः । दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥ ९० ॥ विद्वद्वृन्दगुणानुरूपविभवत्यागैककल्पद्रुमे स्वर्गे वासिनि भोजराजनृपतौ विद्यानवद्यात्मनि । दातारो भुवि नैव भूमिवलये मा सन्तु किं तावता ज्ञातारोऽपि न सन्ति हन्त नितरामेतावता दूयते ॥ ९१ ॥ स्पृष्टाकृष्टासिपिष्टोत्कटकरटिघटाकुम्भकूटाघटान्तर्निष्ठ्यूतासृक्तटिन्यास्तटनिकटरटत्कोणपादाट्टहासः । भोजेन्द्र त्वद्रणक्ष्माक्षतभटविकटोरःस्थलत्रोटकुप्यद्गृध्रौघत्रोटकोटिप्रकटचटचटाशब्दरौद्रोऽभवद्वाक् ॥ ९२ ॥ भो भो श्रीभोजदेव श्रयत विनयतः शात्रवः क्षत्रवर्गाः प्राणत्राणाय नौका न भवति भवतां क्वाप्यरण्यं शरण्यम् । मत्वा मातङ्गकुम्भद्वितयमिति पुरा क्रूरवृत्तिर्भिनत्ति क्रुद्धः शुद्धान्तकान्ताकुचकलशयुगं रंहसा सिंहशावः ॥९३ ॥ नीरक्षीरे गृहीत्वा सकलखगपतीन्याति नालीकजन्मा[6] चक्रं धृत्वा कराब्जे सकलजलनिधीश्चक्रपाणिर्मुकुन्दः । सर्वानुद्धृत्य शैलान्दहति पशुपतिर्भालनेत्रेण पश्यन्व्याप्ता त्वत्कीर्ति-

---

१ इन्द्रः. २ कुतूहलविशिष्टः. ३ खटिनीशकलेन. ४ सुरतक्रीडायां विच्छिन्नसूत्राद्धारादृलिताः. ५ अपसारिताः. ६ ब्रह्मा.

कान्ता सकलवसुमती भोजराज क्षितीन्द्र ॥ ९४ ॥ स्वर्गाद्गोपाल कुत्र व्रजसि सुरमुने भूतले कामधेनोर्वत्सस्यानेतुकामस्तृणचयमधुना मुग्धदुग्धं न तस्याः । श्रुत्वा श्रीभोजराजप्रचुरवितरणं व्रीडशुष्कस्तनी सा व्यर्थो हि स्यात्प्रयासस्तदपि तदरिभिश्चर्वितं सर्वमुर्व्याम् ॥ ९५ ॥ कूर्मः पातालगङ्गापयसि विहरतां तत्तटीरूढमुस्तामादत्तामादिपोत्री शिथिलयतु फणामण्डलं कुण्डलीन्द्रः । दिग्मातङ्गा मृणालीकवलनकलनां कुर्वतां पर्वतेन्द्राः सर्वे स्वैरं चरन्तु त्वयि वहति विभो भोज देवीं धरित्रीम् ॥ ९६ ॥ **पृथ्वीराजः** ॥ मन्दश्चन्द्रकिरीटपूजनरसे तृष्णा न कृष्णार्चने स्तम्भः शंभुनितम्बिनीप्रणतिषु व्यग्रो न धातुर्गृहे । अस्माकं परमर्दनोऽस्ति वदने न्यस्तेन संरक्षितः पृथ्वीराजनरेश्वरादिति नृणां तत्पत्तने पूज्यते ॥ ९७ ॥ **बीसलः** ॥ आ विन्ध्यादा हिमाद्रेर्विरचितविजयस्तीर्थयात्राप्रसङ्गादुद्ग्रीवेषु प्रहर्षान्नृपतिषु विनमत्कन्धरेषु प्रपन्नः । आर्यावर्तं यथार्थं पुनरपि कृतवान्म्लेच्छविच्छेदनाभिर्देवः शाकंभरीन्द्रो जगति विजयते बीसलः क्षोणिपालः ॥ ९८ ॥ **विग्रहराजः** ॥ ब्रूते संप्रति चाहुवाणतिलकः शाकंभरीभूपतिः श्रीमान्विग्रहराज एष विजयी संतानजातात्मजः । अस्माभिः करदं व्यधायि हिमवद्विन्ध्यान्तरालं भुवः शेषस्वीकरणाय मास्तु भवतामुद्योगशून्यं मनः ॥ ९९ ॥ **हम्मीरः** ॥ मुञ्चति मुञ्चति [1]कोशं भजति च भजति [2]प्रकम्पमरिवर्गः । हम्मीरवीरखड्गे त्यजति त्यजति [3]क्ष्मामाशु ॥ १०० ॥ मा चक्र चक्रिविरहज्वरकातरो भूः संकोचमम्बुज न याहि न यामिनीयम् । हम्मीरभूपहयपादविदीर्णभूमीरेणूत्करैरयमकारि दिवान्धकारः ॥ १०१ ॥ **अनङ्गभीमः** ॥ पृथ्वी श्रीमदनङ्गभीम महती तद्वेष्टनं वारिधिः पीतोऽसौ कलशोद्भवेन मुनिना स व्योम्नि खद्योतवत् । तद्विष्णोर्दनुजाधिनाथजयिनः पूर्णं पदं नाभवद्देवश्चेतसि वर्तते तव सदा त्वत्तो महान्नापरः ॥ १०२ ॥ **जगद्देवः** ॥ चक्रः पप्रच्छ पान्थं कथय मम सखे नास्ति स क्वापि देशो वस्तुं नो यत्र रात्रिर्भवति भुवि खगायेति स प्रत्युवाच । नीते मेरौ समाप्तिं कनकवितरणैः श्रीजगद्देवनाम्ना सूर्येऽनन्तर्हितेऽस्मिन्कतिपयदिवसैर्वासराद्वैतसृष्टिः ॥ १०३ ॥ **श्रीकर्णः** ॥ [4]मुखे हारावाप्तिर्न[5]यनयुगले कङ्कणभरो नि[6]तम्बे पत्राली [7]सतिलकमभूत्पाणियुगलम् । अरण्ये श्रीकर्ण त्वदरियुवतीनां विधिवशादपूर्वोऽयं भूषाविधिरहह जातः किमधुना ॥ १०४ ॥ त्वं द्वित्राणि पदानि गच्छसि महीमुल्लङ्घ्य यान्ति [8]द्विषस्त्वं बाणान्दशपञ्च मुञ्चसि परे सर्वाणि शस्त्राण्यपि । ते [9]देवीपतयस्त्वदस्त्रनिहतास्त्वं मानुषीणां पतिर्निन्दा तेषु कथं स्तुतिस्तव कथं श्रीकर्ण निर्णीयताम् ॥ १०५ ॥ लोकेशः कर्णराजाद्भुतकनकमयस्तावकी-

---

१ पिधानम्; (पक्षे) भाण्डागारम्. २ उल्लासनम्; (पक्षे) प्रकृष्टकम्पम्. ३ क्षान्तिम्; (पक्षे) पृथ्वीम्. ४ मुखे हाहा इति रावस्य शब्दस्यावाप्तिः. ५ नयनयुगले कमुदकं तस्य कणास्तेषां भरः. ६ नितम्बे पत्राणामालिः पङ्क्तिः. ७ तिलकवृक्षालम्बिपाणियुगलम्. ८ वैरिणः. ९ देवाङ्गनास्वामिनः.

नप्रतापाद्ब्रह्माण्डानां समूहो द्रव इव भवतेत्येव संभाव्य यत्नात्। तस्यापि प्लावनार्थं जलनिधिमकरे व्यर्थतामत्र याते देव त्वद्वैरिनारीनयननयनजैर्निर्ममे नीरधीनें ॥ १०६ ॥ श्रीकर्ण प्रौढतेजाः प्रबलरिपुबलासत्वसंतापदक्षो नायं श्रीमत्प्रतापो जगति विलसति श्रीमहाराज किंतु। मन्येऽहं कौशिकेनानुपमितमहसा नूतनस्वर्गसृष्टावुत्कृष्टः सृष्ट एष प्रखरतरकरो भास्करोऽसौ द्वितीयः ॥ १०७ ॥ पाण्ड्यः ॥ तवाङ्गणे सुन्दर वीर पाण्ड्य मतंगजाः शृङ्खलिनो विभान्ति। आवासदानादरिभूपतीनामाशान्तशैला इव सापराधाः ॥ १०८ ॥ विन्ध्याद्रिः करसाधनी निरुपमो रत्नाकरः कोशभृत्सौगन्धी मलयाचलः परिचराः सर्वेऽपि विद्याधराः। विश्वाशापरिपूरणं वितरणं देशोऽप्यहो दक्षिणः पाण्ड्याखण्डल वीर पाण्ड्य भवतः किं किं न लोकोत्तरम् ॥ १०९ ॥ एतद्दन्तिबलैर्विलोक्य निखिलामालिङ्गिताङ्गीं भुवं संग्रामाङ्गणसीम्नि जंगमगिरिस्तोमभ्रमाधायिभिः। पृथ्वीन्द्रः पृथुरेतदुग्रसमरप्रेक्षोपेनभ्रामरश्रेणीमध्यचरः पुनः क्षितिधरक्षेपाय धत्ते धियम् ॥ ११० ॥ नृसिंहः ॥ आहवे जगदुद्दण्डराजमण्डलराहवे। श्रीनृसिंह महीपाल स्वस्त्यस्तु तव बाहवे ॥ १११ ॥ त्वयि लोचनगोचरं गते सफलं जन्म नृसिंहभूपते। अजनिष्ट ममेति सादरं युधि विज्ञापयति द्विषां गणः ॥ ११२ ॥ कौमुदीव तुहिनांशुमण्डलं जाह्नवीव शशिखण्डमण्डनम्। पश्य कीर्तिरनुरूपमाश्रिता त्वां विभाति नरसिंहभूपते ॥ ११३ ॥ गण्डाभोगे विहरति मदैः पिच्छिले दिग्गजानां वैरिस्त्रीणां नयनकमलेष्वञ्जनानि प्रमार्ष्टि। यद्यप्येषा हिमकरकराद्वैतसौवस्तिकी ते कीर्तिर्दिक्षु स्फुरति तदपि श्रीनृसिंह क्षितीन्द्र ॥ ११४ ॥ विद्यारत्नं सरसकविता यानरत्नं तुरंगो वाञ्छारत्नं परमपदवी भोगरत्नं मृगाक्षी। स्रोतोरत्नं विबुधतटिनी मासरत्नं वसन्तो भूभृद्रत्नं कनकशिखरी भूपरत्नं नृसिंहः ॥११५॥ निशारत्नं चन्द्रः शयनतलरत्नं शशिमुखी सभारत्नं विद्वाञ्श्रवणपुटरत्नं हरिकथा। कलारत्नं गानं दिविगमनरत्नं दिनकरो महीरत्नं मन्ये सपदि नरसिंहः क्षितिपतिः ॥ ११६ ॥ श्रीलक्ष्मीनरसिंहसान्द्रजलदे चञ्चन्नखालीतडिद्धाम्नि च्छन्नरिपुप्रतापतपने कोपावलिं वर्षति। पूर्णा शोणितवाहिनी सुरमनःसंतापदावानलः शान्तोऽभूद्विरराम वैरिवनितासीमन्तमार्गोदयः ॥ ११७ ॥ निर्यच्छोणितपूरताम्रवपुषः स्वैरं रुदन्तो मुहुर्देव श्रीनरसिंह ते रिपुजना दिग्वाससो निस्त्रपाः। उद्गच्छज्जठरान्त्रनालसहितास्ते नूनमासन्पुनर्जन्मानो रणभूमिमातुरुदरात्तत्कालमेव च्युताः ॥११८॥ देव त्वत्तरुणप्रतापशिखिनो निःशेषमर्चायते शत्रूणां पटलं तदीयमयशो जानामि धूमायते। मार्तण्डांशुलसन्नखावलिरसौ ज्वालाकलापायते दुःखानां निकरस्तथा सुमनसां संघः पतङ्गायते ॥ ११९ ॥ किं मध्याह्नदिवाकरोऽयमपरः किं वायमौर्वानलः किं वासौ चपलाचयः पशुपतेः किं भालनेत्रानलः। किं वासौ

---

१ उपगतानाम्. २ चन्द्रकलाभूषणम्. हरमित्यर्थः. ३ गण्डप्रदेशे. ४ पङ्किले. ५ प्रोञ्छति. ६ स्वस्तीत्याहेत्यर्थः.

प्रलयानलः किमथवा सर्वोऽपि भौमानलः श्रीमत्सिंह भवत्प्रतापमहिमा नोदेति केषां मतिः ॥ १२० ॥ काठिन्यं कुचकुम्भयोर्नयनयोश्चाञ्चल्यमेतद्द्वयं भो ब्रह्मन्भवता कथं न पदयोरस्माकमासादितम् । इत्थं श्रीनरसिंह ते त्रिभुवनाधीशस्य धाटीभिया कान्तारेषु मिथः पलायनपरा जल्पन्ति वैरिस्त्रियः ॥१२१॥ एताः संप्रति गर्भगौरवभराद्राज्ञोऽवरोधाङ्गनाः कान्तारेषु पलायितुं बत कथं पङ्गूचां भवेयुः क्षमाः । इत्थं चेतसि संविभाव्य सदयं वैकुण्ठकण्ठीरव त्वन्नादावलिभिः सखीभिरिव किं तद्गर्भपातः कृतः ॥१२२॥ स्नातस्त्वद्रिपुरक्तपाथसि यशोधौताम्बरं धारयँल्लक्ष्मीश त्वदरातिवक्त्रकमलैर्भूदेवतां पूजयन् । जुह्वच्चैतदसून्प्रकोपदहने युष्मत्प्रतापोदयः शत्रुच्छत्रधरार्थदर्पयशसां प्राणाहुतीराददे ॥ १२३ ॥ कीर्तिः श्रीनरसिंह ते त्रिपथगा तत्रोदितं कैरवं चान्द्रं मण्डलमत्र नीलमिव यत्तद्भृङ्गवृन्दं किमु । यद्वा त्वद्दलितारिवृन्दतरुणीचित्तेन्धनाग्नेः स्थलं चन्द्रस्तत्र विभाति नीलमिव यद्धूमः स मन्यामहे ॥ १२४ ॥ अन्तर्विष्णोस्त्रिलोकी निवसति फणिनामीश्वरे सोऽपि शेते सिन्धोः सोऽप्येकदेशे तमपि चुलुकयां कुम्भयोनिश्चकार । धत्ते खद्योतलीलामयमपि नभसि श्रीनृसिंह क्षितीन्द्र त्वत्कीर्तेः कर्णनीलोत्पलमिदमपि च प्रेक्षणीयं विभाति ॥ १२५ ॥ नृत्यद्भर्गाट्टहासप्रचरसहचरैस्तावकीनैर्यशोभिर्धावल्यं नीयमाने त्रिजगति परितः श्रीनृसिंह क्षितीन्द्र । नेदृग्यद्येष नाभीकमलपरिमलप्रौढिमासादयिष्यद्देवानां नाभविष्यत्कथमपि कमलाकामुकस्यावबोधः ॥ १२६ ॥ श्रीमद्वैकुण्ठकण्ठीरव तव निनदाकर्णनत्रासधावच्छक्रेभोद्भिन्नगण्डस्थलविगलदतिस्वच्छमुक्तामणीनाम् । माला तारावलीयं विलसति च पतद्दानपाथःपयोधिर्नो चेत्कुत्या नु तारावलिरथ लवणः सागरोऽसौ कुतस्त्यः ॥ १२७ ॥ द्विर्भावः पुष्पकेतोर्विबुधविटपिनां पौनरुक्त्यं विकल्पश्चिन्तारत्नस्य वीप्सा तपनतनुभुवो वासवस्य द्विरुक्तिः । द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य कुर्वन्नानन्दं कोविदानां जगति विजयते श्रीनृसिंहः क्षितीन्द्रः १२८ ॥ **वीरवरः** ॥ कामो वामदृशां निधिर्नयजुषां कालानलो विद्विषां स्वःशाखी विदुषां गुरुर्गुणवतां पार्थो धनुर्धारिणाम् । लीलावासगृहं कलाकुलजुषां कर्णः सुवर्णार्थिनां श्रीमान्वीरवरः क्षितीश्वरवरो वर्वर्ति सर्वोपरि ॥ १२९ ॥ **वीरभानः** ॥ लङ्काधामनि वीरभाननृपतेः प्रेक्ष्य प्रतापोदयं प्रत्यागारमधीरनीरजदृशो भूयो हुताशभ्रमात् । क्षुभ्यद्वाणिविधूतपाणिविगलन्मुक्तामणिप्रस्खलद्बाष्पश्रेणिविलोलवेणिदयितं कण्ठस्थले बिभ्रति ॥ १३० ॥ भेरीझाङ्कृतिभिस्तुरंगनिनदैः कुम्भीन्द्रकोलाहलैः प्रस्थाने तव वीरमान दलितं ब्रह्माण्डभाण्डोदरम् । आधाय ज्वलति प्रतापदहने रङ्कैः पुनर्वेधसा तारानायकतारकासुरसरिद्व्याजादिवायोजितम् ॥ १३१ ॥ **वीरसिंहः** ॥ वीरसिंहारिनारीणामञ्जनाक्ताश्रुबिन्दवः । उरोजे पतिता रेजुः

१ विष्णोरुदरे. २ शेषे. ३ ज्योतिरिङ्गणः. ४ विस्तारस. ५ सदर्थैः. ६ कीर्तिवच्छुभ्र इत्यर्थः.

सरोजे मधुपा इव ॥ १३२ ॥ यस्योच्छिन्ना न वेदा मनसि सदयता दूषणानामभावो दक्षो दूरेऽणुदृष्ट्या जहति कठिनतां दानशक्तिर्गरिष्ठा । आधत्ते यश्च कुन्दं शिरसि द्रवतां यश्च दूरीकृतार्तिः स श्रीमान्वीरसिंह त्वमिव तव रिपुस्तत्र दम्भं प्रतीमः ॥१३३॥ वैकुण्ठाभप्रकामः कमलयुतशिराः कुञ्जराकृष्टदृष्टिः कोदण्डोदारनामाप्यमितपरिजनो विश्वविख्यातकीर्तिः । सुन्दर्यासक्तचित्तः समरणविजयी कङ्कणाहारयुक्तो वीर श्रीवीरसिंह त्वमिव तव रिपुः किंतु मुक्तादिवर्णः ॥ १३४ ॥ रूपनारायणः ॥ अये यदि समीहसे परपुरावरोधं सदा समाकलय मद्वचः किमपि रूपनारायण । प्रतीपनृपनागरीनयननीरकल्लोलिनीसमुत्तरणचातुरीं तुरगराजमध्यापय ॥ १३५ ॥ रामजामः ॥ क्षुभ्यत्प्रत्यर्थिपृथ्वीपतिहृदयसरस्तोषशोषं दधाने त्वद्दोष्णां सुप्रतापे तपति बहुगुणा रामजाम क्षितीन्द्र । सूर्यो मित्रत्वमायात्समजनि दहनः कृष्णवर्त्मा निमज्जन्पारावाराम्बुपूरे निवसति वडवावह्निरन्यत्किमु धाम ॥१३६॥ श्रीवीरः ॥ दृष्टः साक्षादसुरविजयी नाकिनां चक्रवर्ती मात्स्यो न्यायः कथयति यथा वारुणीदण्डनीतेः । पातालेन्द्रादहिभयमथास्त्येव नित्यानुषक्तं तन्नः पुण्यैरजनि भवता वीर राजन्वती भूः ॥१३७॥ ऐश्वर्यं नहुषस्य शंभुविषयश्रद्धा दशास्यस्य सा शौर्यं श्रीरघुनायकस्य सहजं गाम्भीर्यमम्भोनिधेः । दातृत्वं बलिकर्णयोरिह जगत्येकत्र चेत्स्यात्तदा श्रीवीरक्षितिपालमौलिनृपतेः साम्यं कथंचिद्भवेत् ॥ १३८ ॥ भिक्षुद्वारि सदानवारिमधुपश्रेणीमिमान्दूभ्रमान्धत्ते यन्तृवधूर्वधूकरतलं शोणाम्बुजाशङ्कया । सैवान्वेति पलायितेति चकिता हस्ताग्रमाधुन्वती मुग्धा वीरमहीपते तदखिलं त्वद्दानलीलायितम् ॥ १३९ ॥ श्रीवीर क्षितिपाल ते सुललितं दानोद्यमे यद्वचः क्वास्ते [1]सर्वहिरण्यमित्युदभवत्तत्कालमाकर्ण्य तत् । तापः प्राप हिरण्यरेतसि जनिं जाड्यं हिरण्याचले स्वेदाम्भोऽपि हिरण्यगर्भवपुषि स्वापाय संत्रासतः ॥ १४० ॥ राजानः शशिभास्करान्वयभुवः के के न संजज्ञिरे भर्तारं पुनरेकमेव हि भुवस्त्वां वीर मन्यामहे । येनाङ्गं परिमृद्य कुन्तलमथाकृष्य व्युदस्यायतं चोलं प्राप्य च मध्यदेशमसकृत्काश्यां करः प्रापितः ॥ १४१ ॥ स्वान्ते वैभवमस्ति नैव परतः प्रामाण्यनिर्धारणं नैवातद्वति तत्प्रकारकमतिर्नैवोपमानं तव । त्वद्देशेषु विभाति न च्छलकथा नो वा क्वचित्संशयः श्रीवीर प्रथिता कथं पुनरियं नैयायिकत्वप्रथा ॥ १४२ ॥ कीर्तिस्ते धनिकाधनं मधुरिमा तस्याधमर्णा सुधा शीतांशुः प्रतिभूस्तदर्थनकृते सैषा दिवं धावति । सा लीना तव वाचि वीरनृपते चन्द्रो निरङ्घ्रिध्वनिः शङ्कातङ्कभृदंशुकावृततनुर्नक्तं परिभ्राम्यति ॥ १४३ ॥ वीरक्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुषस्त्वत्कीर्तेस्तुलनां मृगाङ्कमलिनो धत्तां कथं चन्द्रमाः । स्यादेतत्त्वदरातिसौधशिखरप्रोद्भूतदूर्वाङ्कुरग्रासव्यग्रमतिः पतेद्यदि पुनस्तस्याङ्कशायी मृगः ॥ १४४ ॥ श्रीमद्वीर महीमहेन्द्र भवतः प्रस्थानकालोद्भव-

---

१ इह पद्ये शत्रुपक्ष आद्याक्षरत्यागः.

